॥ अथाचारार्कानुक्रमणिका प्रारभ्यते ॥

श्रीगणेशायनमः॥ ॥ ॐ ॥जानकीनयनयुग्मगोचरंमानिनांनयनयोरगोचरं॥नीलमेघरुचिरच्छविंसदाभा
वयेमनसिराघवंमुदा॥१॥उच्चैरपर्णासुखचंद्रबिंबंपरामृशंतंनिजपाणिपल्लवैः॥गंगाधरंनौमिभुजंगराड्भक्
ष्यभीत्याचकितंमुहुर्मुहुः॥२॥महादेवतनूजन्माभारद्वाजकुलोद्भवः॥दिवाकरोरविंनत्वाध्याचारार्कंतनोत्यसौ॥
३॥ तत्रादावुपोद्घातप्रकरणमारभ्यते॥ हारीतः॥ अज्ञानतमसाधानांभ्रामितानांकुदृष्टिभिः॥धर्मशास्त्रप्र
दीपोयंधार्योमार्गोपदेशकः॥मनुः॥ आचारःपरमोधर्मोनृणांश्रेयःकरोभवेत्॥ इहलोकेपराकीर्तिःपरत्रपर
मंसुखं॥आचारात्प्राप्यतेश्रैष्ठ्यमाचारात्कर्मलभ्यते॥कर्मणाजायतेज्ञानंज्ञानान्मोक्षमवाप्यते॥ पराशरोपि
॥आचारःपरमोधर्मआचारःपरमंतपः॥आचारःपरमंज्ञानमाचारात्किंनसाध्यते॥ यस्त्वाचारविहीनोपिविद्वा
न्वेदपरायणः॥सर्वधर्मबहिष्कार्योयथाशूद्रस्तथैवसः॥स्मृत्यंतरेलौकिकाचारोप्यावश्यकत्वेनोक्तःकिंपुनः
शास्त्रीयः॥सयथा॥ यद्यपिस्यात्स्वयंब्रह्मात्रैलोक्याकर्षणक्षमः॥ तथापिलौकिकाचारंमनसापिनलंघयेत्॥
॥तथा॥ समयाचारिकोधर्मोजातिदेशकुलोद्भवः॥ग्रामाचाराःपरिग्राह्याःसर्वत्रैवयथोदितम्॥ धर्ममूलमाहया
ज्ञवल्क्यः॥श्रुतिःस्मृतिःसदाचारःस्वस्यचप्रियमात्मनः॥सम्यक्संकल्पजःकामोधर्ममूलमिदंस्मृतमिति॥
पद्मपुराणेपि॥ बहुत्वादिहशास्त्राणांधर्ममूलंश्रुतिःस्मृतिः॥श्रुतिस्मृतिपुराणानांविरोधोयदिदृश्यते॥श्रौतं
तत्रप्रमाणंस्याद्द्वयोर्द्वैधेश्रुतिर्वरा॥श्रुतिद्वैधंतुयत्रस्यात्तत्रधर्मावुभौस्मृतौ॥स्मृतिद्वैधेतुविषयःकल्पनीयःपृ

थक्पृथक्।वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययः॥वेदोनारायणःसाक्षात्स्वयंभूरितिशुश्रुमः॥योवैदिकमनादृ 

त्यकर्मस्मार्तैतिहासिकं॥मोहात्समाचरेद्विप्रोनसपुण्येनलिप्यते॥धर्मलक्षणमाहशंखः॥देशकालउपायेनद्रव्यंश्र
द्धासमन्वितम्।पात्रेप्रदीयतेयत्तत्सकलंधर्मलक्षणं॥हेमाद्रौविष्णुधर्मोत्तरेपि।गंगास्नानंशिवोदेवोप्रियपूजात्मचिं
तनं॥ध्यानंनारायणस्यैतत्सकलंधर्मलक्षणमिति॥तत्रैवबृहस्पतिः॥दयाक्षमानसूयाचशौचानायासमंगलं॥अका
र्पण्यमस्पृहत्वंसर्वसाधारणानिच॥सर्वेषांविप्रराजन्यविट्शूद्राणांधर्मलक्षणानीत्यर्थः॥दयादीनांलक्षणमाह॥
सएव॥परेवाबंधुवर्गेवामित्रेद्वेष्टरिवासदा॥आपन्नेरक्षितव्यंतुदयैषापरिकीर्तिता॥१॥बाह्येवाभ्यंतरेवापिदुःख
उत्पादितेपरैः॥नकुप्यतिनवाहंतिसाक्षमापरिकीर्तिता॥२॥गुणान्नगुणिनोहंतिस्तौतिमंदगुणानपि॥नान्यदोषेषुर
मतेसानसूयाप्रकीर्तिता॥३॥अभक्ष्यपरिहारश्चसंसर्गश्चाप्यनिंदितैः॥स्वधर्मेचव्यवस्थानंशौचमेतत्प्रकीर्तितं॥
४॥शरीरंपीड्यतेयेनसुशुभेनापिकर्मणा॥अत्यंतंतन्नकुर्वीतअनायासःसउच्यते॥५॥प्रशस्ताचरणंनित्यमप्रश
स्तविवर्जनं॥एतद्धिमंगलंप्रोक्तमृषिभिस्तत्त्वदर्शिभिः॥६॥स्तोकादपिप्रदातव्यमदीनेनांतरात्मना॥अहन्यहनिय
त्किंचिदकार्पण्यंहितत्स्मृतं॥७॥यथोत्पन्नेनसंतोषःकर्तव्योह्यल्पवस्तुनि॥परस्यचिंतयेन्नोर्थंसाऽस्पृहापरि
कीर्तितेति॥८॥कर्मकरणेदिङ्नियमउक्तःकर्मप्रदीपेकात्यायनेन॥यत्रदिङ्नियमोनास्तिजपहोमादिकर्मसु॥ति 
स्रस्तत्रदिशःप्रोक्ताऐंद्रीसौम्यापराजिता॥गौतमः॥रात्रावुदङ्मुखःकुर्याद्दैवकार्यंसदैवहि॥शिवार्चनंसदाप्येवं

शुचिः कुर्यादुदङ्मुखः ॥ सदा रात्रौ दिवा चेति व्याख्यातं गुरुभिः क्वचित् ॥ विष्णुः ॥ दिङ्नियमाभावे प्राचीमनुरुध्य क
र्म कुर्यात् ॥ प्राच्युक्ता चारमयूखे तंत्रांतरे ॥ यत्रैव भानुस्तु वियत्युदेति प्राचीं तु तां वेदविदो वदंति ॥ ततोपरां पूजकपूज्य
योश्च सदागमज्ञाः प्रवदंति तां तु ॥ द्वितीयात्वागमोक्तपूजायामेवेति तत्रैवोक्तं ॥ कात्यायनः ॥ यत्रोपदिश्यते कर्म
कर्तुरंगं न तूच्यते ॥ दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥ आश्वलायनसूत्रं च दक्षिणं प्रतीयादनादेशइति ॥ वाराहपु
राणे ॥ स्नानपूजातर्पणादि जपहोमसुरार्चनम् ॥ उपवासव्रता कार्यं सायंसंध्याहुतीर्विना ॥ चतुर्विंशतिमते ॥ इक्षूनपः
फलं मूलं पयस्तांबूलमौषधम् ॥ भक्षयित्वापि कर्तव्याः स्नानदानादिकाः क्रियाः ॥ कर्मप्रदीपे ॥ पित्र्यमंत्रानुद्रवणे आ
त्मालंभेधमेक्षणे ॥ अधोवायुसमुत्सर्गे प्रहासेनृतभाषणे ॥ मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे ॥ निमित्तेष्वेषु सर्व
त्र कर्म कुर्वन्नपः स्पृशेत् ॥ आत्मालंभो हृदयस्पर्शः ॥ हारीतः ॥ आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ॥ शुष्कवासाः
स्थले कुर्यात्तर्पणाचमनं जपं ॥ आपस्तंबः ॥ संध्यार्थे भोजनार्थे वा स्नानार्थे पितृकर्मणि ॥ शूद्राहृतेन नाचामेद्यागादिहव
नेषु च ॥ यमः ॥ आपः करनखस्पृष्टाः समाचमति यो द्विजः ॥ सुरां पिबति सुव्यक्तं यमस्य वचनं यथा ॥ बौधायनः ॥ शुद्धा
भावे भवेत् किंचिद् भूमौ त्यक्त्वा तु तज्जलं ॥ योगयाज्ञवल्क्यः ॥ आर्षं छंदश्च दैवत्यं विनियोगं तथैव च ॥ वेदितव्यं प्रयत्नेन ब्रा
ह्मणेन विशेषतः ॥ छंदोगपरिशिष्टे ॥ आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ॥ तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता
॥ सदोपवीतिना भाव्यं सदा बद्धशिखेन च ॥ विशिखो व्युपवीतश्च यत्करोति न तत्कृतं ॥ न चात्रोत्तरार्धेन यज्ञोपवीतस्य

आ॰ कर्मांगत्वोक्तेः कर्मकालातिरिक्तकालेयज्ञोपवीतधारणमैच्छिकमितिवाच्यं॥ मलापकर्षणस्नानेगात्राभ्यंगेनतथैवच॥उप र्क॰
॥ २ ॥ वीतंपृथक्कुर्यादन्यत्रनरकंव्रजेत्॥ इत्याश्वलायनोक्तेः॥ मंत्रन्यस्तोपवीतंयद्विनाभ्यंगंनचोद्धरेत्॥ त्रुटितंवायदिभ्रष्टं
पुनर्मंत्रेणधारयेत्॥ नवीनंधारयेद्विप्रोनजीर्णंनपरैर्धृत मितिहारीतोक्तेश्च॥ अथात्रप्रसंगाद्यज्ञोपवीतनिष्पत्तिप्रका
रंचवदामः॥ प्रयोगपारिजातेविष्णुः॥ कार्पासक्षौमगोवालशणवल्कतृणादिकं॥ यथासंभवतोधार्यमुपवीतंद्विजाति
भिः॥ शुचौदेशेशुचिःसूत्रंसंहतांगुलिमूलके॥ आवेष्ट्यषण्णवत्यातत्त्रिगुणीकृत्ययत्नतः॥ अब्लिंगकैश्चमंत्रैस्तुप्रक्षा
ल्योर्ध्ववृतंकृतम्॥ पुनस्तत्त्रिगुणीकृत्यनवसूत्रमधोवृतं॥ अप्रदक्षिणमावृत्तंसावित्र्यात्रिगुणीकृतं॥ वसिष्ठः॥
त्रिरावेष्ट्यदृढंकृत्वाहरिब्रह्मेश्वरान्नमेत्॥ एवंकृत्वोपवीतंस्यात्तस्यैकोग्रंथिरिष्यते॥ देवलः॥ ग्रंथेश्चनवसूत्रस्यव
क्ष्यंतेदेवताःक्रमात्॥ ॐकारोग्निस्तथानागःसोमःपितृप्रजापतिः॥ वायुःसूर्यश्चशर्वश्चइत्येतानवतंतवः॥ रुद्रेण
दीयतेग्रंथिःसावित्र्याचाभिमंत्रितम्॥ तद्धार्यमुपवीतंस्यान्नातिलंबंनचोच्छ्रितम्॥ सावित्र्यादशकृत्वोद्भिर्मंत्रि
ताभिस्तदुक्षयेत्॥ ब्रह्मचारिणएकंस्यात्स्नातकेद्वेबहूनिवा॥ यज्ञोपवीतंपरममितिमंत्रेणधारयेत्॥ बहूनांधार
णेतत्रमस्त्येकंमंत्रइष्यते॥ भृगुः॥ ब्रह्मसूत्रंचसव्येंसेस्थितं यज्ञोपवीतिता॥ प्राचीनावीतिताऽसव्येकंठस्थेतुनिवी
तिता॥ मनुः॥ मेखलामजिनंदंडमुपवीतंकमंडलुं॥ अप्सुप्रास्येद्विनष्टानिगृहीत्वान्यानिमंत्रवदिति॥ ॥इतिभा ॥२॥
रद्वाजमहादेवभट्टात्मजदिवाकरकृते आचारार्के उपोद्घातप्रकरणंसमाप्तम्॥ ॥भूयासुर्मेपुंडरीकायनाक्षे

रामेनित्यंभूमिजाप्राणनाथे॥ संसाराब्धिंदूरपारंप्रतर्तुं श्रद्धानोकामारुरुक्षोःप्रणामाः॥१॥आश्वलायनः॥ अथोच्यतेगृ
हस्थस्यनित्यकर्मयथाविधि॥ यत्कृत्वानृण्यमाप्नोतिदैवात्पित्र्याच्चमानुषात्॥ अथात्रब्राह्ममुहूर्तमारभ्यास्वापंकर्मा
ण्युच्यंते॥ ब्राह्ममुहूर्तश्चद्वेधाअंत्ययामात्मकोरात्रेरुपांत्यमुहूर्तश्चतत्राद्यःपितामहेनोक्तः॥ रात्रेस्तुपश्चिमोयामोमुहू
र्तोब्राह्मउच्यते॥ द्वितीयस्तुप्रयोगपारिजातेरात्रिगतमुहूर्तपंचदशकंप्रक्रम्यब्राह्मोनाभस्वतश्चैवमुहूर्तप्रक्रमोनिशी
ति॥ मनुः॥ ब्राह्मेमुहूर्तेबुध्येतधर्मार्थौचानुचिंतयेत्॥ कायक्लेशांश्चतन्मूलान्वेदतत्वार्थमेवच॥ आगमे॥ ब्राह्मेमुहूर्ते
चोत्थायचिंतयेद्रघुनंदनं॥ श्रीपूर्वंजयमध्यस्थंद्विजैर्यांतंविचक्षणइत्यादिप्रातःस्मरणंपितामहोक्तंब्राह्ममुहूर्तमार
भ्यकार्यमितिकेचित्॥ श्रीमातामहचरणास्तुद्वितीयब्राह्ममुहूर्तमारभ्यप्रातःस्मरणंकार्यं॥ पितामहोक्तस्तु॥ वेदा
भ्यासार्थमित्याहुःयुक्तंचैतत्॥ रात्रेरंतिमयामेतुद्विजोवेदंविचिंतयेत् इतिपरशुरामनिबंधेकात्यायनोक्तेः॥ अत्र
स्वापेप्रायश्चित्तमुक्तंस्मृतिरत्नावल्यां॥ ब्राह्मेमुहूर्तेयानिद्रासापुण्यक्षयकारिणी॥ तांकरोतिद्विजोमोहात्पादकृ
च्छ्रेणशुध्यतीति॥ अत्रस्मरणीयमाहव्यासः॥ महर्षिर्भगवान्व्यासःकृत्वेमांसंहितांपुरा॥ श्लोकैश्चतुर्भिर्धर्मात्मा
पुत्रमध्यापयच्छुकं॥ मातापितृसहस्राणिपुत्रदारशतानिच॥ संसारेष्वनुभूतानियांतियास्यंतिचापरे॥ शोक-
स्थानसहस्राणिभयस्थानशतानिच॥ दिवसेदिवसेमूढमाविशंतिनपंडितम्॥ ऊर्ध्वबाहुर्विरौम्येषनचकश्चिच्छृणो
तिमे॥ धर्मादर्थश्चकामश्चसकिमर्थंनसेव्यते॥ नजातुकामान्नभयान्नलोभाद्धर्मंजह्याज्जीवितस्यापिहेतोः॥धर्मो

नित्यःसुखदुःखेत्वनित्येजीवोनित्योहेतुरस्यत्वनित्यः॥ इमांभारतसावित्रींप्रातरुत्थाययःपठेत्॥ सभारतफलंप्रा
प्यपरंब्रह्माधिगच्छति॥ धर्मचिंतनम्॥ प्रातःस्मरामिखलुतत्सवितुर्वरेण्यंरूपंहिमंडलमृचोथतनुर्यजूंषि॥ सामानि
यस्यकिरणाःप्रभवादिहेतुंब्रह्माहरात्मकमलक्ष्यमचिंत्यरूपं॥ प्रातर्नमामितरणिंतनुवाङ्मनोभिर्ब्रह्मेंद्रपूर्वकसुरैर्नु
तमर्चितंच॥ वृष्टिप्रमोचनविनिग्रहहेतुभूतंत्रैलोक्यपालनकरंत्रिगुणात्मकंच॥२॥ प्रातर्भजामिसवितारमनंतश
क्तिंपापौघशत्रुभयरोगहरंपरंच॥ तंसर्वलोककलनात्मककालमूर्तिंगोकंठबंधनविमोचनमादिदेवम्॥३॥ श्लोक
त्रयमिदंभानोःप्रातःप्रातःपठेत्तुयः॥ ससर्वव्याधिनिर्मुक्तःपरंसुखमवाप्नुयात्॥४॥ प्रातःस्मरामिगणनाथमना
थबंधुंसिंदूरपूरपरिशोभितगंडयुग्मं॥ उद्दंडविघ्नपरिखंडनचंडदंडमाखंडलादिसुरनायकवृंदवंद्यम्॥१॥ प्रातर्न
मामिचतुराननवंद्यमानमिच्छानुकूलमखिलंचवरंदधानम्॥ तंतुंदिलंद्विरसनप्रिययज्ञसूत्रंपुत्रंविलासचतुरंशि
वयोःशिवाय॥२॥ प्रातर्भजाम्यभयदंखलुभक्तशोकदावानलंगणविभुंवरकुंजरास्यं॥ अज्ञानकाननविनाशन
हव्यवाहमुत्साहवर्धनमहंसुतमीश्वरस्य॥३॥ श्लोकत्रयमिदंपुण्यंसदासाम्राज्यदायकं॥ प्रातरुत्थायसततंयः
पठेत्प्रयतःपुमान्॥४॥ प्रातःस्मरामिशरदिंदुकरोज्ज्वलाभांसद्रत्नवन्मकरकुंडलहारभूषां॥ दिव्यायुधोर्जितसु
नीलसहस्रहस्तांरक्तोत्पलाभचरणांभवतींपरेशां॥१॥ प्रातर्नमामिमहिषासुरचंडमुंडशुंभासुरप्रमुखदैत्य
विनाशदक्षां॥ ब्रह्मेंद्ररुद्रमुनिमोहनशीललीलांचंडींसमस्तसुरमूर्तिमनेकरूपां॥२॥ प्रातर्भजामिभजतामभिला

षदात्रीं धात्रीं समस्तजगतां दुरितापहंत्रीम् ॥ संसारबंधनविमोचनहेतुभूतां मायां परां समधिगम्य परस्य विष्णोः ॥ ३ ॥
श्लोकत्रयमिदं देव्याश्चंडिकायाः पठेन्नरः ॥ सर्वान्कामानवाप्नोति विष्णुलोके महीयते ॥ ४ ॥ प्रातः स्मरामि भवभीति
हरं सुरेशं गंगाधरं वृषभवाहनमंबिकेशम् ॥ खट्वांगशूलवरदाभयहस्तमीशं संसाररोगहरमौषधमद्वितीयं ॥ १ ॥ प्रा
तर्नमामि गिरिशं गिरिजार्धदेहं सर्गस्थितिप्रलयकारणमादिदेवं ॥ विश्वेश्वरं विजितविश्वमनोभिरामं संसार० ॥ २ ॥ प्रा
तर्भजामि शिवमेकमनंतमाद्यं वेदांतवेद्यमनघं पुरुषं महांतं ॥ नामादिभेदरहितं षड्भावशून्यं सं० ॥ ३ ॥ प्रातः समु
त्थाय शिवं विचिंत्य श्लोकत्रयं येऽनुदिनं पठंति ॥ ते दुःखजालं बहुजन्मसंचितं हित्वा पदं यांति तदेव शंभोः ॥ ४ ॥ ॥
स्कांदे ॥ प्रातः स्मरामि भवभीतिमहार्तिशांत्यै नारायणं गरुडवाहनमब्जनाभं ॥ ग्राहाभिभूतवरवारणमुक्तिहेतुं च
क्रायुधं तरुणवारिजपत्रनेत्रम् ॥ १ ॥ प्रातर्नमामि मनसा वचसा च मूर्ध्ना पादारविंदयुगुलं परमस्य पुंसः ॥ नारायण
स्य नरकार्णवतारणस्य पारायणप्रवणविप्रपरायणस्य ॥ २ ॥ प्रातर्भजामि भजतामभयंकरं तं प्राक्सर्वजन्मकृ
तपापभयापहत्यै ॥ यो ग्राहवक्त्रपतितांघ्रिगजेंद्रघोरशोकप्रणाशमकरोद्धृतशंखचक्रः ॥ ३ ॥ श्लोकत्रयमिदं
पुण्यं प्रातःकाले पठेत्तु यः ॥ लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥ ४ ॥ प्रातः स्मरामि रघुनाथमुखारविंदं मंद
स्मितं मधुरभाषि विशालभालं ॥ कर्णावलंबिचलकुंडलशोभिगंडं कर्णांतदीर्घनयनं नयनाभिरामं ॥ १ ॥ प्रातर्भजा
मि रघुनाथकरारविंदं रक्षोगणाय भयदं वरदं निजेभ्यः ॥ यद्राजसंसदि विभज्य महेशचापं सीताकरग्रहणमंगलमा

पसद्यः॥२॥ प्रातर्नमामिरघुनाथपदारविंदंपद्मांकुशादिशुभरेखिसुखावहंमे॥ योगींद्रमानसमधुव्रतसेव्यमानंशापाप
हंसपदिगौतमधर्मपत्न्याः॥३॥ प्रातर्वदामिवचसारघुनाथनामवाग्दोषहारिसकलंशमलंनिहंति॥ यत्पार्वतीस्वपतिना
सहभोक्तुकामाप्रीत्यासहस्रहरिनामसमंजजाप॥४॥ प्रातःश्रयेश्रुतिनुतांरघुनाथमूर्तिंनीलांबुदोत्पलसितेतररत्ननीलां
॥आमुक्तमौक्तिकविशेषविभूषणाढ्यांध्येयांसमस्तमुनिभिर्निजभुक्तिहेतुं॥५॥ यःश्लोकपंचकमिदंप्रयतःपठेतनित्यं
प्रभातसमयेपुरुषःप्रबुद्धः॥ श्रीरामकिंकरजनेषुसएवमुख्योभूत्वाप्रयातिहरिलोकमनन्यलभ्यं॥६॥ ब्रह्मामुरारिस्त्रि
पुरांतकारिर्भानुःशशीभूमिसुतोबुधश्च॥ गुरुश्चशुक्रःशनिराहुकेतवःकुर्वंतुसर्वेममसुप्रभातं॥१॥ भृगुर्वसिष्ठः
क्रतुरंगिराश्चमनुःपुलस्त्यःपुलहश्चगौतमः॥ रैभ्योमरीचिश्च्यवनश्चदक्षःकुर्वंतुसर्वेम॰॥२॥ सनत्कुमारःसनकःस
नंदनःसनातनोप्यासुरिपिंगलौच॥ सप्तस्वराःसप्तरसातलानिकुर्वंतुसर्वेम॰॥३॥ सप्तार्णवाःसप्तकुलाचलाश्चस
प्तर्षयोद्वीपवनानिसप्त॥ भूरादिकृत्वाभुवनानिसप्तकु॰॥४॥ पृथ्वीसगंधासरसास्तथापःस्पर्शीचवायुर्ज्वलितंचतेजः
नभःसशब्दंमहतासहैवकु॰॥५॥ इत्थंप्रभातेपरमंपवित्रंपठेत्स्मरेद्वाशृणुयाच्चतद्वत्॥ दुःस्वप्ननाशस्त्विहसुप्रभातं
भवेच्चनित्यंभगवत्प्रसादात्॥६॥ पुण्यश्लोकोनलोराजापुण्यश्लोकोजनार्दनः॥ पुण्यश्लोकाचवैदेहीपुण्यश्लो
कोयुधिष्ठिरः॥७॥ अश्वत्थामाबलिर्व्यासोहनूमांश्चविभीषणः॥ कृपःपरशुरामश्चसप्तैतेचिरजीविनः॥ सप्तैता
न्संस्मरेन्नित्यंमार्कंडेयमथाष्टमं॥ जीवेद्वर्षशतंसोपिसर्वव्याधिविवर्जितः॥९॥ अहल्याद्रौपदीसीतातारामंदो

दरीतथा ॥ पंचकन्यास्मरेन्नित्यंमहापातकनाशनं ॥ १० ॥ इत्यादिपुराणमंत्रान्पठित्वा ॥ समुद्रवसनेदेविपर्वतस्त
नमंडले ॥ विष्णुपत्निनमस्तुभ्यंपादस्पर्शंक्षमस्वमे ॥ ११ ॥ इतिप्रार्थ्योत्थायरविंगुरुंचनमस्कृत्य ॥ प्रातरग्निमिति
सप्तर्चंसूक्तंपठेदित्यृग्विधाने ॥ ततोमूत्रपुरीषोत्सर्गंकुर्यात् ॥ तत्रादौमूलवाक्यानिलिख्यंते ॥ पराशरः ॥ ततःप्रातः
समुत्थायकुर्याद्विण्मूत्रमेवच ॥ नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकंभुवइति ॥ अंगिराः ॥ उत्थायपश्चिमेरात्रेस्त
तस्मादाचम्यचोदकं ॥ अंतर्धायतृणैर्भूमिंशिरःप्रावृत्यवाससा ॥ अयज्ञियैरनार्द्रैश्चतृणैःसंछाद्यमेदिनीं ॥ कुर्या
न्मूत्रपुरीषेतुशुचौदेशेसमाहितः ॥ देवताऋषयःसर्वेपिशाचोरगराक्षसाः ॥ इतोगच्छंतुभूतानिबहिर्भूमिंक-
रोम्यहं ॥ कृत्वायज्ञोपवीतंतुपृष्ठतःकंठलंबितं ॥ विण्मूत्रंतुगृहीकुर्याद्यद्वाकर्णेसमाहितइति ॥ अयंचव्यवस्थि
तविकल्पः ॥ यद्येकवस्त्रोयज्ञोपवीतंकर्णेकृत्वामूत्रपुरीषोत्सर्गंकुर्यादितिसांख्यायनोक्तेः ॥ याज्ञवल्क्यः ॥ दि
वासंध्यासुकर्णस्थब्रह्मसूत्रउदङ्मुखः ॥ कुर्यान्मूत्रपुरीषेतुरात्रौचेद्दक्षिणामुखः ॥ कर्णोत्रदक्षिणः ॥ कर्मांगा
नामनुक्तौतुदक्षिणांगंभवेत्तदेतिस्मृत्यर्थसारेउक्तत्वात् ॥ पवित्रेदक्षिणेकर्णेकृत्वाविण्मूत्रमुत्सृजेदितिलिंगा-
च्च ॥ भरद्वाजः ॥ अथापकृष्यविण्मूत्रंलोष्टकाष्ठतृणादिना ॥ याज्ञवल्क्यः ॥ गृहीतशिश्नश्चोत्थायमृद्भिरभ्युद्धृ
तैर्जलैः ॥ गंधलेपक्षयकरंशौचंकुर्यादतंद्रितः ॥ यमः ॥ आहरेन्मृत्तिकांविप्रःकूलात्ससिकतांतथा ॥ विप्रेतुशुक्ला
ग्रात्ध्योक्तारक्ताक्षात्रेविधीयते ॥ हरिद्रवर्णावैश्येतुशूद्रेकृष्णातुनिर्दिशेत् ॥ भृगुः ॥ यस्मिन्देशेतुयत्तोयंयाच

यत्रैवमृत्तिका ॥ सैवतत्रप्रशस्तास्यात्तयाशौचंविधीयते ॥ द्वेलिंगेमृत्तिकेदेयेगुदेपंचकरेदश ॥ उभयोःसप्तदान-
व्याविट्शौचेमृत्तिकाःस्मृताः ॥ शौनकः ॥ आर्द्रामलकमात्रास्तुमूत्रशौचेहिमृत्तिकाः ॥ दक्षः ॥ तिस्रोपानेदशैक
स्मिन्नुभयोःसप्तमृत्तिकाः ॥ विष्णुः ॥ अर्धप्रसृतिमात्रातुप्रथमामृत्तिकास्मृता ॥ द्वितीयाचतृतीयाचतदर्धार्धाप्र
कीर्तिता ॥ वसिष्ठः ॥ एकालिंगेकरेतिस्रउभयोर्मृत्तिकाद्वयम् ॥ एकैकयामृदापादौप्रक्षाल्यतुशुचिर्भवेत् ॥ मूत्रशौ
चंसमाख्यातंशुक्रेतुद्विगुणंभवेत् ॥ शंखः ॥ तिस्रस्तुपादयोर्देयाःशौचकामस्यनित्यशइति ॥ एतच्छौचंगृहस्थानां
द्विगुणंब्रह्मचारिणां ॥ त्रिगुणंस्याद्वनस्थानांयतीनांस्याच्चतुर्गुणं ॥ पादशौचक्रमःस्मृत्यंतरे ॥ शौचाद्दतेवामपा
देपूर्वंनक्षालनंभवेत् ॥ शौचेतुवामपूर्वंस्यादन्यत्रदक्षिणंसदा ॥ रात्र्यादौविशेषःस्मृत्यर्थसारे ॥ दिवायद्विहितंशौचं
तदर्धंनिशिकीर्तितम् ॥ तदर्धमातुरेप्रोक्तमातुरस्यार्धमध्वनि ॥ स्त्रीशूद्रादेरशक्तानांबालानांचोपवीतितः ॥ गं
धलेपक्षयकरंशौचंकुर्यान्नसंख्यया ॥ आश्वलायनः ॥ लिंगशौचंपुराकृत्वागुदशौचंततःपरम् ॥ देवलः ॥ धर्मवि
द्दक्षिणंहस्तमधःशौचेनयोजयेत् ॥ तथाचवामहस्तेननाभेरूर्ध्वंनशोधयेत् ॥ ऋष्यशृंगः ॥ धाराशौचंनकर्तव्यं
शौचशुद्धिमभीप्सता ॥ चुलुकेनैवकर्तव्यंहस्तशुद्धिर्विधानतः ॥ मनुः ॥ यावन्नोपैत्यमेध्याक्तोगंधोलेपश्चतत्कृ
तः ॥ तावन्मृद्वारिचादेयंसर्वासुद्रव्यशुद्धिषु ॥ अंगिराः ॥ संध्ययोरुभयोर्जाप्येभोजनेदंतधावने ॥ पितृकार्येचदै

वेच्चतथामूत्रपुरीषयोः॥गुरूणांसन्निधौदानेयोगेनैवविशेषतः॥एषुमौनंसदातिष्ठन्स्वर्गंप्राप्नोतिमानवः॥आप
स्तंबः॥नचसोपानत्कोमूत्रपुरीषेकुर्यादिति॥सायणीये॥गृहीत्वाजलपात्रंतुविण्मूत्रंकुरुतेयदि॥तज्जलंमूत्रसदृशं
पीत्वाचांद्रायणंचरेत्॥मलमूत्रंत्यजेद्विप्रोविस्मृत्यैवोपवीतधृक्॥उपवीतंतदुत्सृज्यधार्यमन्यन्नवंतदेति॥अंगिराः
॥मूत्रोत्सर्गीद्विजःकृत्वानकुर्याच्छौचमात्मनः॥मोहाद्भुंक्तेत्रिरात्रेणजलंपीत्वाविशुध्यति॥उक्तशौचाकरणेप्रायश्चि
त्तंस्मृतिरत्नावल्यां॥गायत्र्यष्टशतंचैवप्राणायामत्रयंतथेतिजपेदितिविशेषः॥बौधायनः॥देशंकालंतथात्मानं
द्रव्यंद्रव्यप्रयोजनम्॥उपपत्तिमवस्थांचज्ञात्वाशौचंप्रकल्पयेत्॥व्यासः॥अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा॥
यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः॥आश्वलायनः॥कुर्याद्द्वादशगंडूषान्पुरीषोत्सर्जनेततः॥मूत्रोत्सर्गेतु
चतुरोभोजनांतेतुषोडश॥भक्ष्यभोज्यावसानेतुगंडूषाष्टकमाचरेत्॥गंडूषदेशःप्रयोगपारिजाते॥पुरतःसर्वदे
वाश्चदक्षिणेपितरस्तथा॥ऋषयःपृष्ठतःसर्वेवामेगंडूषमाचरेत्॥अथप्रयोगः॥पूर्वोक्तब्राह्ममुहूर्तेउत्थायाच
म्येष्टदेवतांनमस्कृत्यप्रातःस्मरणंविधायरविंगुरुंनमस्कृत्यग्रामाद्बहिर्नैर्ऋत्यामिषुक्षेपात्ययेशुद्धमृत्तिकांससि
कतांजलपात्रंचादायकीटादिरहितस्थलंगत्वामृज्जलपात्रेनिधायायज्ञियैरनार्द्रैस्तृणैर्भूमिमाच्छाद्यप्रावृतशि
राःपृष्ठतःकंठलंबितयज्ञोपवीतःएकवस्त्रश्चेद्दक्षिणकर्णेनिहितयज्ञोपवीतोमौनीघ्राणास्येपिधायदिवोदङ्मु-
खोरात्रौदक्षिणामुखोमूत्रपुरीषेउत्सृज्यलोष्टादिनागुदंपरिमृज्यगृहीतशिश्नउत्थायपूर्वगृहीतमृज्जलपात्रे

गृहीत्वार्द्रामलकमात्रमृज्जलैर्द्विवारंलिंगशौचंकृत्वार्धप्रसृतिनदर्धार्धमृज्जलैस्त्रिवारमपानंसंशोध्यपुनर्जलैरेवलिं
गगुदे प्रक्षाल्यशकृद्धृमृत्तिकयैकवारंहस्तंप्रक्षाल्यशकृद्भूमिमागत्यान्यमृज्जलैर्दशवारंवामकरंप्रक्षाल्य ततः करद्व
यंसप्तवारंतावद्भिरेवमृज्जलैः प्रक्षाल्यवामदक्षिणपादौप्रत्येकंत्रिः प्रक्षाल्यान्यजलेनद्वादशगंडूषान्वामभागेकृ
त्वाजलपात्रंत्रिःपर्युक्ष्यजलबिंदून्जलेनिक्षिप्योपवीतीद्विराचामेत्॥ मूत्रमात्रोत्सर्गेतुपूर्ववदेकवारंलिंगंप्रक्षा
ल्यवामकरंत्रिःप्रक्षाल्यकरद्वयंद्विःप्रक्षाल्यैकैकयामृदापादौप्रक्षाल्यगंडूषचतुष्टयंविधायाचामेत्॥ ॥इति
शौचप्रकरणं॥ ॥अथाचमनं॥ ॥वृद्धपाराशरः॥ ॥कृत्वाथशौचंप्रक्षाल्यहस्तौपादौचमृज्जलैः॥निब
द्धशिखकच्छस्कद्विजआचमनंचरेत्॥आचमननिमित्तान्याहहेमाद्रौमनुः॥प्राणस्यायमनंकृत्वाआचमेत्प्रय
तोपिसन्॥आंतरंविद्यतेयस्मात्तस्मादाचमनंस्मृतं॥ कृत्वामूत्रंपुरीषंवारवान्याचांतउपस्पृशेत्॥वेदमध्येष्य
माणश्चोप्यन्नमश्नंश्चसर्वदा॥खानींद्रियाणिछिद्राणिकौर्मे॥चंडालम्लेच्छसंभाषेस्त्रीशूद्रोच्छिष्टभाषणे॥
उच्छिष्टपुरुषंस्पृष्ट्वाभोज्यंचापितथाविधं॥आचमेदश्रुपातेचलोहितस्यतथैवच॥यमः॥उत्तीर्योदकमाचम्यअ
वतीर्यतथैवच॥एवंस्यात्तेजसायुक्तोवरुणेनापिपूजितः॥मार्कंडेयपुराणे॥देवार्चनादिकर्माणितथागुर्वभिवाद
नं॥कुर्वीतसम्यगाचम्यतद्वदेवभुजिक्रियां॥वसिष्ठः॥क्षुतेनिष्ठीवितेसुप्तेपरिधानेश्रुपातने॥पंचस्वेतेषुचाचा
मेच्छ्रोत्रंवादक्षिणंस्पृशेत्॥इत्याचमननिमित्तानि॥ अथद्विराचमननिमित्तान्याह॥ ॥हेमाद्रौव्यासः॥

दानेभोजनकालेचसंध्ययोरुभयोरपि॥ आचांतःपुनराचामेज्जपहोमार्चनेषुच॥ याज्ञवल्क्यः॥ स्नात्वापीत्वाक्षुतेस्व
प्नेभुक्त्वेरथ्योपसर्पणे॥ आचांतःपुनराचामेद्वासोविपरिधायच॥ कौर्मे॥ ओष्ठौविलोमकौस्पृष्ट्वावासोविपरिधायच॥
रेतोमूत्रपुरीषाणामुत्सर्गेशुद्धभाषणे॥ ष्ठीवित्वाध्ययनारंभेकासश्वासागमेतथा॥ चत्वरंवाश्मशानंवासमागम्यद्वि
जोत्तमः॥ संध्ययोरुभयोस्तद्वदाचांतोथाचमेत्पुनः॥ बौधायनः॥ भोजनेहवनेदानेउपहारेप्रतिग्रहे॥ हविर्भक्षणका
लेचद्विराचामेत्तुसर्वथा॥ हविर्भक्षणोत्तरमाचमनंनकार्यमित्यपिपक्षांतरमपरार्केस्मृत्यंतरे॥ द्राक्षादीनिफल नीक्षू
न्पयोमूलंधृतंदधि॥ तांबूलमौषधंपत्रंहविर्भुक्त्वापिनाचमेदिति॥ आचमनविधिमाहयोगी॥ अंतर्जानुःशुचौदे
शउपविष्टउदङ्मुखः॥ प्राग्वाब्राम्हेणतीर्थेनद्विजोनित्यमुपस्पृशेत्॥ त्रिःप्राश्यापोद्विरुन्मृज्यखान्यद्भिःसमुपस्पृशेत्
॥ इदंचद्विजातिविषयं॥ हृत्कंठतालुनाभिस्तुयथासंख्यंद्विजातयः॥ शुध्येरंस्त्रीचशूद्रश्चसकृत्स्पृष्टाभिरंततइति
॥ याज्ञवल्क्येनस्त्रीशूद्रयोः सकृद्विधानात्॥ उदङ्मुखत्वादिनियमोपिद्विजग्रहणात्तद्विषयएव ॥ जलग्रहणं
गोकर्णाकृतिकरेणकार्यमित्याहकण्वः॥ आयतंपूर्वतःकृत्वागोकर्णाकृतिवत्करम्॥ संहतांगुलिनातोयंगृहीत्वा
पाणिनाद्विजः॥ मुक्तांगुष्ठकनिष्ठेनशेषेणाचमनंचरेत्॥ अन्वारंभमाहयमः॥ तावन्नोपस्पृशेद्विद्वान्यावद्ब्रामेनन
स्पृशेत्॥ तीर्थमाहयोगी॥ कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रंकरस्यच॥ प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्॥
लघुपराशरः॥ तीर्थानिपंचविप्रस्यकरेसंतिचदक्षिणे॥ ब्राम्हंदैवंतथापैत्रंप्राजापत्यंचसौमिकम्॥ ब्राह्मंपश्चिमरे

स्वायां देवंत्वंगुष्टमूर्द्धनि ॥ प्राजापत्यं कनिष्टादौ मध्येसौम्यं विजानतः ॥ अंगुष्टस्य प्रदेशिन्यामध्येपैत्रं प्रतिष्ठित
मिति ॥ करतलेत्वग्नितीर्थं तेन प्रतिग्रहः कार्यः ॥ तथाच प्रचेताः ॥ दक्षिणहस्तमध्येब्राह्मणस्याग्नेयतीर्थमाग्नेये
न प्रतिगृण्हीयादिति ॥ आचमनीयार्थं तोयमाह ॥ शंखः ॥ अद्भिः समुद्धृताभिस्तुहीनाभिः फेनबुद्बुदैः ॥ वन्हिना
नभितप्ताभिरक्षाराभिरुपस्पृशेत् ॥ उपस्पृशेदाचामेत् ॥ आतुराणामुष्णोदकमप्यविरुद्धं ॥ तथाच आपस्तंबः
॥ उदकेनातुराणांच तथोष्णेनोष्णपायिनामिति अगस्त्यसंहितायां ॥ केशवाद्यैस्त्रिभिः पीत्वाद्वाभ्यां प्रक्षालयेत्
करौ ॥ द्वाभ्यामोष्ठौतु संमृज्य द्वाभ्यामुन्मार्जनं तथा ॥ एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः ॥ संप्रोक्ष्यैकेन मू
र्द्धानं ततः संकर्षणादिभिः ॥ आस्यनासाक्षिकर्णं च नाभिं हृत्कंभुजौ स्पृशेत् ॥ एवमाचमनं कृत्वा साक्षान्नाराय
णो भवेत् ॥ शंखः ॥ तर्जन्यंगुष्टयोगेन स्पृशेन्नासापुटद्वयं ॥ अंगुष्टानामिकाभ्यांच चक्षुःश्रोत्रे पुनःपुनः ॥ कनिष्ठां
गुष्टयोर्नाभिं हृदयं च तलेनवै ॥ तलेन पाणितलेन ॥ सर्वाभिस्तु ततः शीर्षं बाहू चाग्रेण संस्पृशेत् ॥ ॥ अथप्रयोगः
॥ शुचौदेशेभूमिष्ठपादो नर्जानुहस्तः प्राङ्मुखउदङ्मुखोवोपविश्य संहतांगुलिना शुद्धं जलं गृहीत्वा मुक्तांगुष्ठ
कनिष्ठेन वामेनान्वारब्धेन पाणिना ब्रह्मतीर्थेन केशवनारायणमाधवेति संबुद्ध्यंतैस्त्रिभिर्नामभिः स्त्रिःपिबेत् ॥
गोविंदविष्णु इति द्वाभ्यां करौ प्रक्षाल्य मधुसूदन त्रिविक्रमेति द्वाभ्यामंगुष्ठमूलेनोष्ठौ संमृज्य वामन श्रीधरेति द्वा
भ्यां तथैव मुखमुन्मार्ज्य हृषीकेशेति वामकरं प्रोक्ष्य पद्मनाभेति पादौ संप्रोक्ष्य दामोदरेति मूर्द्धानं संप्रोक्ष्य संक

र्पणेतिसंहतमध्यमांगुलित्रयेणास्यंसंस्पृश्य वासुदेवप्रद्युम्नेतिद्वाभ्यामंगुष्ठतर्जनीभ्यांनासापुटेसंस्पृश्यानिरुद्धपुरु
षोत्तमेतिद्वाभ्यामंगुष्ठानामिकाभ्यांचक्षुषीसंस्पृश्याधोक्षजनारसिंहेतिद्वाभ्यांतथैवश्रोत्रेसंस्पृश्याच्युतेतिकनिष्ठां
गुष्ठाभ्यांनाभिंसंस्पृश्य जनार्दनेतिपाणितलेनहृदयंसंस्पृश्योपेंद्रेतिशिरःसंस्पृश्यहरेकृष्णेतिद्वाभ्यांदक्षिणवाम
बाहुमूलेस्पृशेत्॥ एवमाचमनासंभवेस्मृत्यर्थसारे॥त्रिःपीत्वाहस्तंप्रक्षाल्यश्रोत्रंस्पृशेत्॥ ॥इत्याचारार्केआ
चमनप्रकरणं॥ ॥अथदंतधावनं॥ ॥अत्रिः॥मुखेपर्युषितेनित्यंभवत्यप्रयतोनरः॥तदार्द्रकाष्ठंशुष्कंवाभक्ष
येद्दंतधावनं॥कात्यायनोपि॥उत्थायनेत्रेप्रक्षाल्यशुचिर्भूत्वासमाहितः॥परिजप्यचमंत्रेणभक्षयेद्दंतधावनमि
ति॥शुचिर्भूत्वाविण्मूत्रोत्सर्गेणशुचिर्भूत्वेत्यर्थः॥जपमंत्रःप्रयोगेवक्ष्यते॥अत्रिः॥कनिष्ठाग्रसमंस्थूलंपर्वार्धकृत
कूर्चकं॥दंतधावनमुद्दिष्टंजिव्होल्लेखनिकातथा॥इदंदंतान्प्रक्षाल्यस्नायादितिछंदोगपरिशिष्टात्स्नानांगमितिके
चित्॥तन्न मध्यान्हस्नानादावपिदंतधावनप्रसंगात्॥नचेष्टापत्तिरितिवाच्यं॥अत्र्यादिवचनैर्मुखेपर्युषितेसत्येव
आचमनवत्स्वतंत्रस्यैवतस्यशुद्धिहेतुतयाभिधानात्॥नहिमध्यान्हकालेमुखस्यपर्युषितत्वंसंभवति॥तस्मात्पृ
थगेवतदितिसिद्धं॥अतएवश्रीमातामहचरणाःदर्शपूर्णमासाभ्यामिष्ट्वासोमेनयजेतेतिवत्कालार्थःसंयोगइति
युक्तमुत्पश्यंति॥ दंतधावनेदिङ्नियममाहगर्गः॥ प्राङ्मुखःप्राप्नुतेसौख्यंशरीरारोग्यमेवच॥दक्षिणेनतथाक
ष्टंपश्चिमेनपराजयः॥उत्तरेणगवांनाशःस्त्रीणांपरिजनस्यचेति॥अत्रकालादिनिषेधमाह॥व्यासः॥प्रतिपद्

शषष्ठीषुनवम्यांचैवभारत ॥ दंतानांकाष्ठसंयोगेदहत्यासप्तमंकुलं ॥ श्राद्धेचयज्ञेनियमेनाद्यात्प्रोषितभर्तृका ॥ दंत
काष्ठमितिशेषः ॥ आचार्यः ॥ अष्टम्योश्चचतुर्दश्योःपंचदश्यांत्रिजन्मसु ॥ व्यतीपातेचसंक्रांत्यांदंतकाष्ठंनभक्षयेत्
॥ वसिष्ठः ॥ शन्यर्कशुक्रवारेषुकुजाहेव्रतवासरे ॥ जन्माहेश्राद्धदिवसेदंतकाष्ठंविवर्जयेत् ॥ यमः ॥ मध्यान्हेश्राद्धवे
लायांयोभक्षेद्दंतधावनं ॥ निराशास्तस्यगच्छंतिदेवाःपितृगणैःसह ॥ दंतकाष्ठनिषेधेकर्तव्यमाह ॥ व्यासः ॥
अलाभेदंतकाष्ठानांनिषिद्धायांतिथौतथा ॥ अपांद्वादशगंडूषैर्विदध्याद्दंतधावनं ॥ तिथिग्रहणंनिषिद्धका
लोपलक्षणं ॥ दंतकाष्ठालाभेवर्ज्यकालेचतृणपर्णैर्द्वादशगंडूषैर्वामुखंसंशोध्यजिव्होल्लेखःकार्यएव ॥ तथाच
व्यासः ॥ प्रतिपद्दर्शषष्ठीषुनवम्यांदंतधावनम् ॥ पर्णैरन्यत्रकाष्ठैस्तुजिव्होल्लेखःसदैवतु ॥ स्मृत्यंतरेपि ॥ तृणपर्णैः
सदाकुर्यादमामेकादशींविना ॥ निषिद्धेदिवसेकुर्याज्जंबूप्लक्षाम्रपर्णकैरितिस्कांदे ॥ अभ्यंगेचोदधिस्नानेदंत
धावनमैथुने ॥ जातेचमरणेचैवतत्कालव्यापिनीतिथिः ॥ दंतकाष्ठपरिमाणंविष्णुराह ॥ द्वादशांगुलिकंविप्रे
काष्ठमाहुर्मनीषिणः ॥ शूद्रविट्क्षत्रजातीनांनवषट्चतुरंगुलं ॥ अत्रोत्तरार्द्धेव्युत्क्रमेणान्वयोबोध्यः ॥ गर्गस्तु
परिमाणांतरमाह ॥ दशांगुलंतुविप्राणांक्षत्रियाणांनवांगुलम् ॥ अष्टांगुलंतुवैश्यानांशूद्राणांसप्तसंमितम् ॥ चतु
रंगुलमानंतुनारीणांनात्रसंशयः ॥ नृसिंहपुराणे ॥ तिंत्रिणीवेणुपृष्ठंचआम्रनिंबौतथैवच ॥ अपामार्गश्चबिल्वश्चअ
र्कश्चोदुंबरस्तथा ॥ बदरीतिंदुकास्त्वेतेप्रशस्तादंतधावने ॥ नारदोपि ॥ सर्वेकंटकिनःपुण्याःक्षीरिणश्चयशस्वि

नः ॥ प्रशस्ताइतिशेषः ॥ वृद्धमनुरपि ॥ खदिरस्यकरंजस्यकदंबस्यतथैवच ॥ अर्कस्यकरवीरस्यकुटजस्यविशेषत
इति ॥ इहैतेषांफलादिबहुपिवक्तव्यंविस्तरार्कापत्यानब्रूमः ॥ अंगिराः ॥ प्रक्षाल्यभक्षयेत्काष्ठंप्रक्षाल्यैवतुसंत्यजे
त् ॥ आयुरित्यादिमंत्रोयमुक्तःशाखाभिमंत्रणे ॥ पैठी न सिः ॥ तृणपर्णोदकेनांगुल्यावादंतान्धावयेत् प्रदेशिनीवर्ज
मिति ॥ शौनकः ॥ पश्चाद्द्वादशगंडूषैर्विदध्याद्दंतधावनम् ॥ स्मृत्वोंकारंचगायत्रींनिबध्नीयाच्छिखांततइति ॥ अथ
प्रयोगः ॥ प्रतिपत्षष्ठ्यष्टमीनवम्येकादशीचतुर्दशीपंचदशीसंक्रांतिव्यतीपातव्रतोपवासश्राद्धदिनार्कभौमशुक्रम
ददिननिषिद्धदिनातिरिक्तदिनेषुब्राह्मणोद्वादशांगुलप्रमाणेनदशांगुलप्रमाणेनवाकनिष्ठांगुलिवत्स्थूलेनतिंत्रिण्या
दिविहितवृक्षोद्भवेनचूर्णीकृताग्रेणप्रक्षालितेनेशुष्केणार्द्रेणवा ॥ आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ॥ ब्रह्मप्र
ज्ञांचमेधांचत्वन्नोधेहिवनस्पते इतिमंत्रेणाभिमंत्रितेनकाष्ठेन ॥ मुखदुर्गंधिनाशायदंतानांचविशुद्धये ॥ ष्ठीव
नायचगात्राणांकुर्वेहंदंतधावनंइति मंत्रमुक्त्वादंतान्संशोध्यजिह्वोल्लेखंकृत्वाद्वादशगंडूषांश्चकृत्वा ॐकारंगा
यत्रींचस्मृत्वाशिखांबध्नीयादितिदंतधावनप्रकरणम् ॥ ॥ अथप्रातःस्नानं ॥ ॥ हेमाद्रौयोगयाज्ञवल्क्यः ॥ ॥
अगम्यागमनात्पापात्पापेभ्यश्चप्रतिग्रहात् ॥ रहस्याचरितात्पापान्मुच्यतेस्नानमाचरन् ॥ अस्नात्वानाचरेत्कर्म
जपहोमादिकिंचन ॥ लालास्वेदसमाकीर्णःशयनादुत्थितःपुमान् ॥ हेमाद्रौदक्षः ॥ अत्यंतमलिनःकायोनवच्छिद्र
समन्वितः ॥ स्रवत्येवदिवारात्रौप्रातःस्नानंविशोधनम् ॥ मार्कंडेयः ॥ अस्नातस्यक्रियाःसर्वाभवंतिह्यफलायतः

॥ प्रातःसमाचरेत्स्नानंतच्चनित्यमितिस्मृतम्॥ प्रातःस्नानंप्रशंसंतिदृष्टादृष्टकरंहितम्॥ सर्वमर्हतिशुद्धात्माप्रातः
स्नायीजपादिकम्॥गुणादशस्नानपरस्यसाधोरूपंचतेजश्चबलंचशौचं॥ आयुष्यमारोग्यमलोलुपत्वंदुःस्वप्नना
शश्चयशश्चमेधा॥ तच्चत्रिविधमाह॥हेमाद्रौदक्षः॥ नित्यंनैमित्तिकंकाम्यंत्रिविधंस्नानमुच्यते॥ तर्पणंतुभवेत्तस्य
अंगत्वेनप्रकीर्तितमिति॥दर्भयुक्तंस्नानंप्रशस्तमित्याहहारीतः॥ दर्भयुक्तंप्रशस्तंस्यात्स्नानदानजपादिकम्॥स्मृ
त्यंतरे॥ स्नानेहोमेजपेदानेस्वाध्यायेपितृकर्मणि॥ करौसदर्भौकुर्वीततथासंध्याभिवादने॥ हेमाद्रावंगिराः॥विना
दर्भेणयत्स्नानंयच्चदानंविनोदकं॥ असंख्यातंचयज्जप्यंतत्सर्वंनिष्फलंभवेत्॥ दर्भाश्चोक्ताः॥ प्रयोगपारिजाते॥
कुशाःकाशायवादूर्वाउशीराश्चसकुंदकाः॥ गोधूमाव्रीहयोमुंजादशदर्भाःसबल्वजाः॥ बल्वजंशुच्यार्द्रतृणं॥कुशा
भावेतुकाशाःस्युःकाशाःकुशसमाःस्मृताः॥कुशाभावेगृहीतव्याअन्येदर्भायथोचितम्॥ व्यासः॥ कुशैःपूतं
भवेत्स्नानंकुशेनोपस्पृशेद्द्विजः॥कुशेनचोद्धृतंतोयंसोमपानेनसंमितं॥ शंखः॥दर्भाःकृष्णाजिनंमंत्राब्राह्मणाह
विरग्नयः॥ अयातयामान्येतानिनियोज्यानिपुनःपुनः॥यातयामंचिरंतनंकार्याक्षमं॥कुशग्रहणकालउक्तःका-
त्यायनेन॥ मासेनभस्यमावास्यातस्यांदर्भोच्चयोमतः॥ अयातयामास्तेदर्भाविनियोज्याःपुनःपुनः॥अत्रदर्भप
दंकुशपरमेव दर्शेश्रावणमासस्यसमंत्रोत्पाटिताःकुशाइति॥ विष्णूक्तेःस्पर्शमंत्रेकुशग्रहणाच्च॥आनयनप्रकार
माहमार्कंडेयः॥ शुचिर्भूत्वाशुचौदेशेस्थित्वापूर्वोत्तरामुखः॥ ॐकारेणैवमंत्रेणकुशान्स्पृष्ट्वाद्विजोत्तमः॥ विरिं

विनासह्योत्पन्न परमेष्ठिनिसर्गज ॥ दहस्वसर्वपापानिदर्भस्वस्तिकरोभव ॥ हुंफट्कारेणदर्भोस्तुसकृच्छित्वासमुद्ध
रेत् ॥ कुशमहिमानंगोभिलः ॥ कुशमूलेस्थितोब्रह्माकुशमध्येजनार्दनः ॥ कुशाग्रेशंकरंविद्यात्सर्वेदेवाःसमंततइति
कुशपवित्रमाहकात्यायनः ॥ अनंतर्गर्भिणंसाग्रंकौशंद्विदलमेवच ॥ प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित् ॥ मार्कंडे
यः ॥ चतुर्भिर्दर्भपिंजूलैर्ब्राह्मणस्यपवित्रकं ॥ एकैकंन्यूनमुद्दिष्टंवर्णेवर्णेयथाक्रमम् ॥ हेमाद्रौ ॥ अन्यान्यपिपवित्रा
णिकुशदूर्वामयानिच ॥ हेमात्मकपवित्रस्यकलांनार्हंतिषोडशीं ॥ काम्यंचोक्तंशारदायां ॥ ताम्रतारसुवर्णानामर्क-
षोडशरवेंदुभिः ॥ कृतात्रिशक्तिमुद्रेयंतीव्रदारिद्र्यनाशिनी ॥ इदंपवित्रंतर्जन्यांधारयंतिसांप्रदायिकाः ॥ योगयाज्ञ
वल्क्यः ॥ अनामिकाधृतंहेमतर्जन्यांरूप्यमेवच ॥ कनिष्ठिकाधृतंखड्गंतेनपूतोभवेन्नरः ॥ रौप्यधारणमिदंजीवत्पि
तृकभिन्नविषयम् ॥ तथाचप्रयोगपारिजाते ॥ उत्तरीयंयोगपट्टंतर्जन्यांरजतंतथा ॥ नजीवत्पितृकैर्धार्यंज्येष्ठोवा
विद्यतेयदिइत्यस्तुप्रसंगागतं ॥ अथप्रकृतमनुसरामः ॥ बौधायनः ॥ सप्ताहंप्रातरस्नायीसंध्याहीनस्त्रिभिर्दिनैः
॥ द्वादशाहमनग्निःस्याद्द्विजःशूद्रत्वमाप्नुयात् ॥ तद्दोषपरिहारार्थंभानुवारेपिशस्यते ॥ भानुवारेत्ववश्यंप्रातःस्ना
नंकार्यमित्यर्थः ॥ स्नानकालमाहसएव ॥ अरुणकिरणग्रस्तांप्राचींदिशिमवलोक्यस्नायादिति ॥ स्नानंनद्यादिषु
कार्यमित्याहहेमाद्रौमनुः ॥ नदीषुदेवखातेषुतडागेषुसरःसुच ॥ स्नानंसमाचरेन्नित्यंगर्तप्रस्रवणेषुच ॥ छंदोग
परिशिष्टे ॥ धनुःसहस्राण्यष्टौचगतिर्यासांनविद्यते ॥ मातानदीशब्दवहागर्तास्तेपरिकीर्तिताः ॥ धनुर्हस्तचतुष्टयं

॥ विवस्वान् ॥ एकतः सर्वतीर्थानि जान्हव्येकैव चान्यतः ॥ ब्रह्मलोकेपि शिरसः पतिता या महीतलं ॥ मरीचिः ॥ भूमिष्ठ
मुद्धृतं वापि शीतमुष्णमथापि वा ॥ गांगं पयः पुनात्येव पापमामरणं कृतमिति ॥ अथ स्नानविधिः ॥ प्रयोगपारिजाते ॥
न प्रातर्मृत्तिकास्नानं न कुर्याद्गोमयं निशि ॥ प्रातः स्नानं सदा कुर्याद्गोमयेन विचक्षणः ॥ मध्यंदिने मृदा स्नानं सायं कार्यं ज
लेन वै ॥ मनुः ॥ खसंस्थं गोमयं ग्राह्यं भूमौ निपतिते पि वा ॥ उपर्यधश्च संत्याज्यं संपाद्यं मध्यमाहियत् ॥ नाभिमात्रे जले
गत्वा त्रिः कुर्यान्मज्जनं ततः ॥ गात्राणां क्षालनं कृत्वा सम्यक्स्नायात्ततः परम् ॥ सम्यग्गोमयादिविधिनेत्यर्थः ॥ आदाय
गोमयं विप्रो वामपाणौ निधाय च ॥ व्याहृत्या तं त्रिधा कृत्वा निक्षिपेल्लवणेन तु ॥ दक्षिणास्थितभागेन रक्षोहानाय
दिक्ष्वथ ॥ तीर्थाभासि क्षिपेद्भागमुत्तरं तारमंत्रितम् ॥ मानस्तोकेति मंत्रेण मध्यं चैवाभिमंत्रयेत् ॥ मूर्द्धादिपादपर्यंतं हं
स्ताभ्यां स समाहितः ॥ गंधद्वारामित्यनया सर्वांगमनुलेपयेत् ॥ प्रार्थनादिमंत्रांस्तु प्रयोगे वक्ष्यामः ॥ पुराणे ॥ ततः
शिखां स्वपुरतः कृत्वा मज्जेन्नदीमुखः ॥ विष्णुः ॥ स्रोतसोभिमुखं स्नायान्नदीषु प्रवहज्जले ॥ स्थावरे च तडागे च र
वेरभिमुखं सदा ॥ वायवीये ॥ संध्यामुखस्तु संध्यायां रात्रौ प्राङ्मुख एव सन् ॥ स्रोतसोभिमुखं स्नानं मार्जनं चाघम
र्षणम् ॥ अन्यत्रार्कमुखो रात्रौ प्राङ्मुखो विमुखोपि वा ॥ कात्यायनः ॥ पुत्रजन्मनिमित्तेषु सर्वेषामुत्तरामुखम् ॥ गृहे गृहमु
खं स्नानं मार्जनादि तु नो भवेत् ॥ प्रयोगपारिजाते ॥ आचम्य मार्जनं कुर्यादापोहिष्ठेति वारुणैः ॥ इमं मे गंग इत्यूकदकमालोड्य
चाघमर्षणं ॥ अंतर्जले मुखं कृत्वा कुर्यान्नासाग्रपीडनं ॥ ऋतं चेति त्र्यृचं चैव द्रुपदां च ततो जपेत् ॥ अष्टाक्षरं च प्रणवं स्मरेद्धि

ष्णुमजंप्रभुं ॥ अष्टाक्षरमंत्रःशारदायाम् ॥ तारंनमःपदंपश्चान्नरौदीर्घसमन्वितौ ॥ यवर्णोणायमंत्रोयंप्रोक्तोच-
स्वक्षरात्मक इति ॥ शौनकः ॥ कुर्याद्द्वादशभिःस्नानंनामभिःकेशवादिभिः ॥ धन्यंयशस्यमायुष्यमारोग्यंबुद्धिवर्धनम्
हस्ताभ्यांजलमादायसकृदेवाभिमंत्रितं ॥ मस्तकेचमुखेबाह्वोर्हृदयेपृष्ठदेशके ॥ अभिषिंचेत्स्वमात्मानंगायत्र्या
योनिमुद्रया ॥ सप्तजन्मकृतंपापंतत्क्षणादेवनश्यति ॥ कार्ष्णाजिनिः ॥ देवर्षिपितृणांचैवएकद्वित्रिक्रमेणतु ॥ जले
दद्याज्जलंचात्रासंस्कृतानांतटेतथा ॥ असंस्कृतानांमृतानामित्यर्थः ॥ असंस्कृतप्रमीतानामेकएवतटेक्षिपेत् ॥
इतिबौधायनोक्तेः ॥ चतुर्विंशतिमते ॥ स्नानादनंतरंतावत्तर्पयेत्पितृदेवताः ॥ उत्तीर्यपीडयेद्वस्त्रंसंध्याकर्मततःपरं
॥ व्यासः ॥ यज्ञोपवीतीदेवानांनिवीतीऋषितर्पणे ॥ प्राचीनावीतीपित्र्येतुस्वेनतीर्थेनभावितः ॥ उशनाः ॥ द्वौह-
स्तौयुग्मतःकृत्वापूरयेदुदकांजलिम् ॥ गोशृंगमात्रमुद्धृत्यजलमध्येजलंक्षिपेत् ॥ हेमाद्रौब्रह्मवैवर्ते ॥ नाभिमात्रेज
लेस्थित्वाकुर्यात्स्नानांगतर्पणं ॥ देवान्ऋषीन्पितृगणान्स्वपितॄंश्चापितर्पयेत् ॥ भगवान् ॥ स्नानांगतर्पणंकृत्वा
यक्ष्मणेजलमाहरेत् ॥ नदीक्ष्मापनंकौर्मे ॥ ज्ञानतोज्ञानतोवापियन्मयादुष्कृतंकृतम् ॥ तत्क्षमस्वाखिलंदेविज
गन्मातर्नमोस्तुते ॥ स्मृत्यंतरे ॥ विकिरेपिंडदानेचतर्पणेस्नानकर्मणि ॥ आचांतःसन्प्रकुर्वीतदर्भसंत्यजनंबुधः
॥ मदनपारिजातेशातातपः ॥ अवमृज्यान्नचस्नातोगात्राण्यंबरपाणिभिः ॥ नचापिधूनयेत्केशान्वाससीनविधू
नयेदितिशातातपः ॥ बहिर्नद्यादिष्वाचांतःसोदकःकिंचिदस्पृशन् ॥ रथ्यागतोपियत्नेनशङ्कन्विरेवह्निमानवइति ॥ अ

थवस्त्रधारणंदेवलः॥ स्वयंधौतेनकर्तव्याःक्रियाधर्माविपश्चिता॥ ननुनेजकधौतेननाहतेनचकर्हिचित्॥ धौतव
स्त्रशोषणप्रकारमाह॥शातातपः॥ प्रागग्रमुदगग्रंवाधौतंवासःप्रसारयेत्॥ दक्षिणाग्रंपश्चिमाग्रंपुनःप्रक्षालनंभ
वेत्॥ स्मृत्यंतरे॥ ईषद्धौतंस्त्रियाधौतंशूद्रधौतंतथैवच॥ प्रसारितंयमादिशिगर्हितंसर्वकर्मसु॥ इतिदक्षस्मृतौ॥
श्रुतिस्मृतिप्रमाणेनग्राम्यंवस्त्रंचधारयेत्॥ षट्कर्मनिरतोविप्रोग्राम्यंवस्त्रंनधारयेत्॥ षट्कर्माणिचोक्तानिस्मृत्यं
तरे॥ स्नानंसंध्याजपोहोमःस्वाध्यायःपितृतर्पणम्॥ मनुः॥ ब्राह्मणस्यासितंवस्त्रंमांजिष्ठंनृपतेःस्मृतम्॥ पीतंवैश्य
स्यशूद्रस्यनीलंमलवदिष्यते॥ याज्ञवल्क्यः॥ अष्टहस्तंनवंश्वेतंसदशंनान्यधारितम्॥ अहतंतद्विजानीयात्स
र्वकर्मसुपावनम्॥ यंत्रनिर्मुक्तमप्रक्षालितमप्यहतमित्याह॥ धर्मप्रकाशेसत्यतपाः॥ अहतंयंत्रनिर्मुक्तमुक्तंवासः
स्वयंभुवा॥ शस्तंतन्मांगलिक्येषुतावत्कालंनसर्वदा॥ मांगलिक्यंमंगलकर्माणिविवाहादीनि॥ कच्छस्थानान्या
हयाज्ञवल्क्यः॥ वामकुक्षौचनाभौचपृष्ठेचैवयथाक्रमम्॥ त्रिकच्छेनसमायुक्तोद्विजोसौमुनिरुच्यते॥ विष्णुपुराणे
॥होमदेवार्चनाद्यासुक्रियासुपठनेतथा॥ नैकवस्त्रःप्रवर्तेतद्विजोनाचमनेजपे॥ द्वितीयवस्त्राभावेपरिधानवस्त्रे
णैवोत्तरीयंकार्यम्॥ एकंचेद्वासोभवतितस्यैवोत्तरवर्गेणप्रच्छादयीतेतिपारस्करगृह्यात्॥ उत्तरीयाभावेवस्त्रस्यो
र्ध्वभागउत्तरीयंकुर्यादितियोगीश्वरवचनाच्च॥ स्मृत्यंतरे॥ यज्ञोपवीतेद्वेधार्येश्रौतेस्मार्तेचकर्मणि॥ तृतीयमुत्तरीया ॥११॥
र्थंवस्त्राभावेचतुर्थकम्॥ आचारमयूखादिग्रंथेषुतुवस्त्राभावेनदिष्यतइतिपाठः॥ परशुरामनिबंधेतु॥उपवस्त्रं

यदानस्यात्तदाचत्वारिधारयेदितियज्ञोपवीतप्रकरणेउक्तम् ॥ आर्द्रवस्त्रमूर्ध्वमार्गेणनिष्कासनीयमित्युक्तम् ॥ प्रयोग
पारिजाते ॥ स्नानंकृत्वार्द्रवस्त्रंतुऊर्ध्वमुत्तारयेद्विजः ॥ आर्द्रवस्त्रमधस्ताच्चेत्पुनःस्नानेनशुद्ध्यति ॥ इदंचगृहस्नानवि
षयं ॥ ऊर्ध्वमुत्तारयेद्वस्त्रंगृहेनद्यामधस्त्यजेदित्याचारादर्शेबौधायनोक्तेः ॥ अथप्रसंगाद्गृहस्नानविधिरुच्यते ॥
व्यासः ॥ शीतास्वप्स्वनिषिच्योष्णामंत्रसंभारयोगतः ॥ गृहेपिशस्यतेस्नानंतद्धीनमफलंस्मृतं ॥ यमः ॥ आपएव
यदापूतास्तासांवन्हिर्विशोधकः ॥ तस्मात्सर्वेषुकालेषुउष्णांभःपावनंस्मृतम् ॥ पादौप्रक्षालयेत्पूर्वंमुखंयज्ञोपवी
तकम् ॥ द्विराचम्यकराभ्यांचदर्भान्धृत्वाशिरवांस्पृशेत् ॥ प्राणायामंततःकुर्यात्कालज्ञानंयथोदितम् ॥ आपो
हिष्ठेतिसूक्तेनइमंमेगंगइत्यथ ॥ अतोदेवेतिसूक्तेनसावित्र्याचविशोधयेत् ॥ शीतोदकंतुदर्भैस्तत्पश्चादुष्णोदकं
क्षिपेत् ॥ अत्रमार्जननिषेधमाह ॥ बौधायनः ॥ गृहस्नानेनतुप्रोक्तंमार्जनंतर्पणादिकं ॥ नांतराचमनंप्रोक्तंपश्चादा
चम्यशुद्ध्यति ॥ संग्रहे ॥ स्नानमध्येनाचमनंमार्जनंतर्पणंनच ॥ वस्त्रस्यपीडनंनैवसंकल्परहितंतथा ॥ संकल्परहितं-
स्नानमध्येसंकल्परहितंनतुसर्वथासंकल्पवर्जितमित्यर्थः ॥ गृहेगृहमुखंस्नानंमध्येसंकल्पवर्जितमितिबृहद्यमो
क्तेः ॥ केचित्तुगृहस्नानेसंकल्पमेवनेच्छंतितन्नदसत् ॥ संकल्पंचयथाकुर्यात्स्नानदानव्रतादिके ॥ अन्यथापुण्यक
र्माणिनिष्फलानिभवंतिचेति मार्कंडेयवाक्यात्संकल्पस्यचावश्यक त्वोक्तेः ॥ संकल्पमूलःकामोवैयज्ञाःसंकल्पसं
भवाः ॥ व्रतंनियमधर्माश्चसर्वेसंकल्पजाःस्मृता इति मनूक्तेश्च ॥ अत्रेष्टज्ञानताज्ञानसंकल्पःकथमिदमनेनसा

आ. धयामीत्यच्छावाकः॥ मंडनः॥ मुख्यकालेयदावश्यंकर्मकर्तुंनशक्यते॥ गौणकालेपिकर्तव्यंगौणोप्यत्रेदृशोभवे कृ.
१२ त्॥ ईदृशोमुख्यसमः॥ अत्रविशेषस्तेनैवोक्तः॥ गौणेष्वेतेषुकालेषुकर्मचोदितमाचरन्॥ प्रायश्चित्तप्रकरणप्रो
क्तांनिष्कृतिमाचरेत्॥ ॥इतिस्नानविधिः॥ अथप्रयोगः॥ अरुणोदयेंतरिक्षस्थंगोमयंसंगृह्यतदभावेभूमिष्ठ
मेवोपर्यधश्चसंत्यज्यमध्यस्थंगृहीत्वाऽन्यांस्नानसामग्रींचादायगंगातीर्थमेत्योद्धृतजलेनमुखंपाणीपादौचप्रक्षा
ल्येष्टदेवताःस्मृत्वानाभिमात्रजलंगत्वात्रिर्निमज्ज्यांगप्रक्षालनंकृत्वादेशकालौस्मृत्वा ममकायवाङ्मनःकृतकर्म
दोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रातःस्नानंकरिष्यइतिसंकल्प्यगोमयंसव्येपाणौकृत्वा ॐ भूर्भुवःस्वरि
तित्रिधाविभज्यदक्षिणभागंप्रणवेनप्राच्यादिदिक्षुनिक्षिप्योत्तरभागंचतथैवतीर्थेनिक्षिप्यमध्यमभागंमानस्तो
केइतिमंत्रेणाभिमंत्र्य॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम्॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम्॥
अग्रमग्रंचरंतीनामोषधीनांवनेवने॥ तासामृषभपत्नीनांपवित्रंकायशोधनम्॥ तन्मोरोगांश्चशोकांश्चनुद
गोमयसर्वदेतिमंत्राभ्यांमूर्द्धादिसर्वांगमनुलिप्य॥ हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः॥ यन्मयाभुक्त
मसाधूनांपापेभ्यश्चप्रतिग्रहः॥ यन्मेमनसावाचाकर्मणावा दुष्कृतंकृतम्॥ तन्नइंद्रोवरुणोबृहस्पतिःसविताच
पुनंतुपुनः पुनरितिद्वाभ्यांवरुणंसंप्रार्थ्य॥ बद्धशिखापुरतःकृत्वा प्रवहज्जलेप्रवाहाभिमुखस्त्रिवारमवगाह्य ॥१२॥
शरीरंप्रक्षाल्य॥ आपोहिष्ठेतिनवर्चसूक्तेनमार्जनंविधायांगुष्ठमूलेनजलंप्रदक्षिणमालोडयेत्॥ इमंमेगंगेइत्यस्य

प्रैयमेधः सिंधुर्नद्योजगतीजलालोडनेविनियोगः॥ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या॥ असिक्न्या मरुद्वृधेवितस्तयार्जीकीयेशृणुह्या सुषोमया॥ इत्यालोड्यजलेमुखंकृत्वानासाग्रंसंपीड्याघमर्षणंकुर्यात्॥ ऋतंचे तिऋचेन॥ ततःॐनमोनारायणायेत्यष्टाक्षरमंत्रं॥ द्रुपदादिवेन्मुमुचानः॥ स्विन्नःस्नात्वीमलादिवा॥ पूतंपवित्रेणे वाज्यं॥ आपःशंधंतुमेनसः॥ इतिचजपित्वा॥ ॐविष्णुंचस्मृत्वाकेशवादिदामोदरांतैर्द्वादशनामभिर्द्वादशकृत्वाआ प्लुत्ययोनिमुद्रयाजलमादायमूर्ध्निमुखेबाह्वोर्हृदयेपृष्ठदेशेगायत्र्याभिषिच्य॥ नंदिनीनलिनीसीतामालतीचम लापहा॥ विष्णुपादाब्जसंभूतागंगात्रिपथगामिनी॥ भागीरथीभोगवतीजान्हवीत्रिदशेश्वरी॥ द्वादशैतानिनामानि यत्रयत्रजलाशये॥ स्नानयुक्तःसदाब्रूयात्तत्रतत्रवसाम्यहम्॥ इतिगंगावाक्यंपठित्वानाभिमात्रजलंगतःसन्स्ना नांगतर्पणंकुर्यात्॥ तच्चेत्थं॥ प्राङ्मुखःसाक्षताभिरद्भिरुपवीतीब्रह्मादयोयेदेवास्तान्देवांस्तर्पयामि॥ भूर्देवांस्तर्प यामि॥ भुवर्देवांस्तर्पयामि॥ स्वर्देवांस्तर्पयामि॥ भूर्भुवःस्वर्देवांस्तर्पयामि॥ इतिपंचमंत्रैरेकैकमंजलिंदेवतीर्थेनद त्वानिवीतीउदङ्मुखःकृष्णद्वैपायनादयोयेऋषयः॥ स्तान्नृषींस्तर्पयामि॥ भूर्ऋषींस्त० भुवर्ऋषींस्त०॥ स्वर्ऋषीं० ॥ भूर्भुवःस्वर्ऋषींस्तर्पयामीतिपंचभिर्द्वौद्वावंजलीसयवाभिरद्भिः प्राजापत्यतीर्थेनदत्वाथदक्षिणामुखः प्राचीना वीतीपितृतीर्थेनसतिलाभिरद्भिः सोमःपितृमान्यमोंगिरस्वानग्निष्वात्ताःकव्यवाहनादयोयेपितरस्तान्पितॄंस्तर्पया मि॥ भूःपितॄंस्तर्प०॥ भुवःपितॄंस्तर्प०॥ स्वःपितॄंस्तर्प०॥ भूर्भुवःस्वःपितॄंस्तर्पयामीतिपंचभिस्त्रिस्त्रिस्तर्पयित्वाती

रमेत्य॥अग्निदग्धाश्चयेजीवायेप्यदग्धाःकुलेमम॥भूमौदत्तेनतोयेनतृप्तायांतुपरांगतिमितिमंत्रेणांजलिंतटेनिक्षिप्य
॥येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः॥तेगृण्हंतुमयादत्तंवस्त्रनिष्पीडनोदकं॥इतिवस्त्रंतीरेनिष्पीड्योपवीती
यन्मयादूषितंतोयंशारीरमलसंभवात्॥तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहम् इतियक्ष्मतर्पणंविधाय॥नद्यभिमु
खमंजलिंबध्वा॥ज्ञानतोज्ञानतोवापियन्मयादुष्कृतंकृतं॥तत्क्षमस्वाखिलंदेविजगन्मातर्नमोस्तुते॥इतिनदीक्षमापनं
कुर्यात्॥ततःपूर्वोक्तंशुष्कंवासःपरिधायोत्तरीयार्थंद्वितीयंप्रावृत्यचतुर्गुणीकृतंपरिधानीयंउपरिदशंनिष्पीड्यद्विराच
म्यतिलकंकुर्यात्॥अथतिलकःप्रयोगपारिजाते॥ललाटेतिलकंकृत्वासंध्याकर्मसमाचरेत्॥अकृत्वाभालतिलकंत
स्यकर्मनिरर्थकं॥मृद्भस्मचंदनंप्रोक्तंतोयंनैवचतुर्थकं॥स्नात्वापुंड्रंमृदाकुर्याद्धुत्वाचैवतुभस्मना॥देवानभ्यर्च्यगंधेन
जलमध्येजलेनतु॥मृदोर्ध्वपुंड्रंभस्मनातिर्यक्चंदनेनोभयमित्याहकात्यायनः॥ऊर्ध्वपुंड्रंमृदाकुर्याद्भस्मनातुत्रिपुं
ड्रकं॥उभयंचंदनेनैवअभ्यंगोत्सवरात्रिषु॥ऊर्ध्वपुंड्रस्यावश्यकत्वमुक्तंसारसमुच्चये॥ऊर्ध्वपुंड्रविहीनस्यश्मशान
सदृशंमुखं॥अवलोक्यमुखंतस्यश्रीसूर्यमवलोकयेत्॥बृहन्नारदीये॥स्नानंदानंजपोहोमःसंध्यास्वाध्याय
कर्मच॥ऊर्ध्वपुंड्रविहीनेनकृतंसर्वंनिष्फलंभवेत्॥ब्रह्मपुराणे॥गंगातीरसमुद्भूतांमृदंमूर्ध्नाबिभर्तियः॥बिभर्ति
रूपंसोर्कस्यतमोनाशायकेवलं॥तिलकस्थानानिब्रह्मांडे॥ललाटेकेशवंविद्यान्नारायणमथोदरे॥माधवंहृदये ॥१३॥
न्यस्यगोविंदंकंठकूपके॥विष्णुंचदक्षिणेकुक्षौतद्भुजेमधुसूदनं॥त्रिविक्रमंकर्णमूलेवामकुक्षौतुवामनं॥श्रीधरं

त्वद्दृषीकेशंवामयोर्बाह्नकर्णयोः॥ पद्मनाभंपृष्ठदेशेककुद्दामोदरंस्मरेत्॥ मूर्ध्निमूलेनमंत्रेणशेषंद्वादशनामभिः॥
संकर्षणादिभिः कृष्णेशक्कुचेत्केशवादिभिः॥ व्यासस्तु॥ वामहस्तेजलंकृत्वासावित्र्याचाभिमंत्रितं॥ तद्विष्णोरि
तिमंत्रेणमर्दयेन्मृत्तिकांततः॥ अतोदेवेतिसूक्तेनतिलकंधारयेत्सदा इत्याह॥ एवंयथासंप्रदायंतिलकंकुर्यात्॥
अथभस्मधारणविधिःसंग्रहे॥ अग्निहोत्राग्निजंभस्मविरजाहोमजंतथा॥ औपासनसमुत्पन्नंसमिदग्निसमुद्भवं
॥ सामिदग्निसमुत्पन्नंधार्यंवैब्रह्मचारिणा॥ शूद्राणांश्रोत्रियागारपचनाग्निसमुद्भवं॥ अन्येषामपिसर्वेषांधार्यंदा
वानलोद्भवमितिपुलस्त्यः॥ अग्निरित्यादिभिर्मंत्रैःशुद्धंभस्माभिमंत्रितं॥ शिवमंत्रेणतद्भस्ममंत्रेणाष्टाक्षरेणवा॥
गायत्र्यावाथदेवर्षेमंत्रेणप्रणवेनचेति॥ आचार्यः॥ ललाटेहृदयेकंठेबाह्वोःपृष्ठेपरेगले॥ त्रिपुंड्रंभस्मनाकुर्यादिष्ट
मंत्रेणमानवइतिक्रियासारे॥ वामहस्ततलेभस्मक्षिप्त्वाच्छाद्यान्यपाणिना॥ अग्निरित्यादिमंत्रेणस्पृशन्भस्माभि
मंत्र्यचस्मृतिसंग्रहे॥ धार्यंभस्मत्रिसंध्यंतुगृहिणाजलसंयुतम्॥ सर्वकालंभवेत्स्त्रीणांयतीनांजलवर्जितं॥ वान
प्रस्थस्यकन्यानांदीक्षाहीनन्नृणांतथा॥ माध्यान्हात्प्राग्जलैर्युक्तंपरतोजलवर्जितम्॥ मध्यांगुलित्रयेणैवस्वदक्षि
णकरस्यच॥ त्रिपुंड्रंधारयेद्विद्वान्सर्वकर्मसुसर्वदा॥ कात्यायनः॥ श्राद्धेयज्ञेजपेहोमेवैश्वदेवेसुरार्चने॥ धृतत्रि
पुंड्रःपूतात्मामृत्युंजयतिमानवः॥ भविष्ये॥ सितेनभस्मनाकुर्यात्त्रिसंध्यंचत्रिपुंड्रकं॥ सर्वपापविनिर्मुक्तःशिवेनस
हमोदते॥ सत्यंशौचंजपोहोमस्तीर्थंदेवादिपूजनं॥ तस्यव्यर्थमिदंसर्वंयस्त्रिपुंड्रंनधारयेत्॥ अत्रोक्तोग्निरित्यादिमं

त्रोऽथर्वशिरवायांदर्शितः॥ अग्निरितिभस्म वायुरितिभस्म जलमितिभस्म स्थलमितिभस्म व्योमेतिभस्म सर्वं ह वाइदंभस्म मन एतानिचक्षूंषिभस्मानीति॥ अस्यऋष्यादिस्मर्यंते॥ भस्मवामहस्तेकृत्वा भस्माभिमंत्रणमित्यस्यपिप्पलादिऋषिः रुद्रोदेवता गायत्रीछंदः भस्मशुध्यर्थेजपेविनियोगः॥ इतित्रिपुंड्रभस्मधारणविधिः॥ एवंभस्मधृत्वासंध्यांकुर्यात्॥ अथसंध्याविधिः॥ ॥मरीचिः॥ संध्यायेननविज्ञातासंध्यायेनानुपासिता॥ जीवमानोभवेच्छूद्रोमृतःश्वाचाभिजायतेइतिसंध्यायानित्यत्वमुक्तम्॥ दक्षः॥ संध्याहीनोशुचिर्नित्यमनर्हःसर्वकर्मसु॥ यदन्यत्कुरुतेकर्मनतस्यफलभाग्भवेदितिशुचित्वसंपादनेनकर्मांगत्वमप्युक्तम्॥ तत्रप्रातःसंध्यायाएवेतिकेचित्॥ श्रीमातामहचरणास्तु संध्यात्रयस्यापिवचनांतरप्राप्ततत्तत्संध्याकालोत्तरतत्तत्कर्मांगत्वमितियुक्तमुत्पश्यंति॥ संध्याकालोधर्मसारे॥उत्तमातारकोपेतामध्यमालुप्ततारका॥ अधमासूर्यसहितामातः संध्यात्रिधामता॥ उत्तमासूर्यसहितामध्यमालुप्ततारका॥ कनिष्ठातारकोपेतासायंसंध्यात्रिधामता॥ प्रयोगपारिजाते॥ उदयास्तमयादूर्ध्वंयावत्स्याद्घटिकात्रयं॥ तावत्संध्यामुपासीतप्रायश्चित्तंततःपरम्॥ तत्रशातातपीये॥ संध्याकालेत्वतिक्रांते-स्नात्वाचम्ययथाविधि॥जपेदष्टशतंदेवींततःसंध्यांसमाचरेत्॥ मदनपारिजातेतु॥ कालातिक्रमणेचैवचतुर्थार्घ्यंप्रदापयेतइत्युक्तं॥ शौनकः॥ प्राणानायम्यविधिवद्वाग्यतःसंयतेंद्रियः॥ अथसंध्यामुपासिष्यइतिसंकल्प्यमार्जयेत्॥ सएव॥ नासिकामंगुलीभिस्तुतर्जनींमध्यमामृते, सव्येनतुसमाकृष्यदक्षिणेन विसर्जयेत्॥ प्रणवव्याहृतीःसप्तगा

यत्रीं शिरसासह ॥ त्रिःपठेदायतप्राणः प्राणायामःसउच्यते ॥ कात्यायनः ॥ दक्षिणेरेचयेद्वायुंवामेनापूरितोदरं ॥ कुंभकेनजपंकुर्यात्प्राणायामोभवेदिति प्रयोगपारिजाते ॥ पंचांगुलीभिर्नासाग्रंपीडयेत्प्रणवेनवै ॥ मुद्रेयंसर्वपापघ्नीवानप्रस्थगृहस्थयोः ॥ कनिष्ठानामिकांगुष्ठैर्यतेश्चब्रह्मचारिणः ॥ मार्जनमाहकात्यायनः ॥ तिसृभिर्मार्जनंकुर्यादापोहीतिकुशोदकैः ॥ प्रतिपादंक्षिपेन्मूर्ध्निप्रतिप्रणवसंयुतम् ॥ ऋग्विधाने ॥ नवप्रणवयुक्तेनआपोहिष्ठेत्यृचेनतु ॥ संवत्सरकृतंपापंमार्जनांतेविनश्यति ॥ प्रजापतिः ॥ ऋगंतेमार्जनंकुर्यात्पादांतेवासमाहितः ॥ अर्धर्चांतेथवाकुर्याच्छिष्टानांमतमीदृशम् ॥ मंत्राचमनमाहशौनकः ॥ अथाचमनमादायसूर्यश्चेतिपिबेदपः ॥ अथमध्यंदिनेत्वापःपुनंत्वितिचमंत्रतः ॥ मार्जनांतराण्याहसएव ॥ प्रणवेनव्याहृतिभिर्गायत्र्याप्रणवाद्यया ॥ आपोहिष्ठेतिसूक्तेनमार्जनंहिचतुर्थकं ॥ इमानिमार्जनानिगृह्येपात्रांतरमादायकार्याणि ॥ तथाचपारिजाते ॥ नद्यांतीर्थेन्हृदेतत्रभाजनेमृन्मयेगृहे ॥ औदुंबरेचसौवर्णेराजतेदारुसंभवे ॥ कृत्वातुवामहस्तेवासंध्योपास्तिंसमाचरेत् ॥ औदुंबरंताम्रंवामहस्तेतुसर्वथापात्रांतराभावेबोध्यमिति श्रीमातामहचरणाः ॥ पात्राकृतिमाहमरीचिः ॥ गोकर्णाकृतिवत्पात्रंताम्रंरौप्यंचहाटकं ॥ जलंतत्रविनिक्षिप्यसंध्योपासनमाचरेत् ॥ अथपापपुरुषमाहशौनकः ॥ उद्धृत्यदक्षिणेहस्तेजलंगोकर्णवत्कृते ॥ निःश्वास्यनासिकाग्रेतुपाप्मानंपुरुषंस्मरेत् ॥ ऋतंचेतित्र्यृचेवापिद्रुपदांवाजपेदृचं ॥ दक्षनासापुटेनैवपाप्मानमपसारयेत् ॥ तज्जलंनावलोक्याथवामभागेक्षितौक्षिपेत् ॥ अथार्घ्यदानंगृह्यपरिशिष्टे ॥ अथाचम्यदर्भपाणिःपूर्ण

मुदकांजलिमादित्याभिमुखः स्थित्वाप्रणवव्याहृतिपूर्वयासावित्र्यात्रिर्निवेदयेत्क्षिपेत्तदेवार्घ्यनिवेदनं॥ असावा
 दित्योब्रह्मेतिप्रदक्षिणंपरिपतन्परिषिच्यापउपस्पृशेदिति॥ शौनकः ईषन्नम्रः प्रभातेतुमध्यान्हे ऋजुसंस्थितः॥ द्विजोर्घ्यंप्र
क्षिपेद्व्यासायंतूपविशन्भुवि॥ मदनरत्ने व्यासः॥ कराभ्यांतोयमादायगायत्र्याचाभिमंत्रितं॥ आदित्याभिमुखस्तिष्ठं-
स्त्रिरूर्ध्वंसंध्ययोः क्षिपेत्॥ सकृदेवतुमध्यान्हे क्षेपणीयंद्विजातिभिरिति॥ अथगायत्रीजपस्तत्रैव॥ धृत्वापवित्रंसंप्रो
क्ष्यजपस्थानंकुशोदकैः॥ आधारादीन्नमस्कृत्यकुशाग्रैरासनंततः॥ बध्वापद्मासनंवापिस्वस्तिकंवायथासुखम्॥
ॐ भूर्भुवः स्वरोमितिजपित्वा रुद्ध्वासनंहितत्॥ गृह्यपरिशिष्टेपि॥ शुचौदेशेदर्भांभसोक्षितेदर्भानास्तीर्यव्याहृतिभि
रुपविश्यप्राणायामत्रयंकृत्वात्मानंव्याहृतिभिरभ्युक्ष्यसावित्र्याऋषिर्दैवतंछंदांस्यनुस्मृत्यषड्भिस्तदंगमंत्रैर्यथांगमा
त्मनिन्यस्यात्मानंतद्रूपंभावये द्यथा॥ तत्सवितुर्हृदयायनमइतिहृदये वरेण्यंशिरसेस्वाहेतिशिरसि भर्गोदेवस्यशिखा
यैवषडितिशिखायां॥ धीमहिकवचायहुमितिउरसि धियोयोनइतिनेत्रत्रयायवौषडितिनेत्रललाटेषुविन्यस्याथप्रचो
दयादित्यस्त्रायफडितिकरतलेरस्त्रंप्राच्यादिदिक्षुन्यसेदेषोंगन्यासएनमप्येकेनेच्छंतिसविधिरवैदिकइतिध्यात्वाग
च्छवरदेदेवीत्यावाह्यतिष्ठन्नर्धनक्षत्रेषामंडलदर्शनान्मंत्रार्थमनुसंदधानः सप्रणवव्याहृतिपूर्विकांसावित्रींजपेदि
ति॥ याज्ञवल्क्यः॥ ध्यायेत्तुमनसामंत्रंजिव्होष्ठौनविचालयेत्॥ नकंपयेच्छिरोग्रीवांदंतान्नैवप्रकाशयेत्॥ यक्षरक्षः 
पिशाचाश्चसिद्धविद्याधरागणाः॥ यस्मात्प्रभावंगृण्हंतितस्माद्गुप्तंतुकारयेत्॥ मनुः॥ विधियज्ञाज्जपयज्ञोविशिष्टोद

शभिर्गुणैः ॥ उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥ जपसंख्यास्मृत्यंतरे ॥ सायंप्रातश्च मध्याह्ने सावित्रीं
वाग्यतो जपेत् ॥ सहस्रपरमां देवीं शतमध्यां दशावरां ॥ अथ गायत्रीजपलक्षणं ॥ संपुटैकषडोंकारा गायत्री त्रिविधा
मता ॥ तत्रैकप्रणवाद्याद्या गृहस्थैर्ब्रह्मचारिभिः ॥ गृहस्थो ब्रह्मचारी च प्रणवाद्यामिमां जपेत् ॥ अंते यः प्रणवं कुर्या
न्नासौ वृद्धिमवाप्नुयात् ॥ संपुटां च षडोंकारां गायत्रीं च जपेद्यतिः ॥ व्यासः ॥ अष्टोत्तरशतं नित्यमष्टाविंशतिरेव वा ॥ वि
धिना दशकं वापि त्रिकालेषु जपेद्द्विजः ॥ ततउद्वास्य गायत्रीमुत्तमेत्यनुवाकतः ॥ अयं च गायत्रीजपस्तीरमेत्य स्थले नि
त्रासनादौ कार्यो न तु जले ॥ कदाचिदपि नो विद्वान्गायत्रीमुदके जपेत् ॥ गायत्र्यग्निमुखा प्रोक्ता तस्मादुत्थाय तां जपेदि
ति श्रीदत्तधृतगोभिलवचनात् ॥ यत्तु ॥ आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपमिति हारीतवचस्तद्गायत्रीजपव्य
तिरिक्तजपविषयम् ॥ नृसिंहपुराणे ॥ त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत ॥ वाचिकश्च उपांशुश्च मानसस्त्रि
विधः स्मृतः ॥ त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरः ॥ एतेषां लक्षणान्याह विश्वामित्रः ॥ यदुच्चनीचस्वरितैः
शब्दैः स्पष्टपदाक्षरैः ॥ मंत्रमुच्चारयेद्वाचा वाचिकोयं जपः स्मृतः ॥ शनैरुच्चारयेन्मंत्रमीषदोष्ठौ च चालयेत् ॥ अपरैर्न श्रुतः
किंचित्स उपांशुजपः स्मृतः ॥ धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ॥ शब्दार्थचिंतनं भूप कथ्यते मानसो जपः ॥ आ
सनान्याह ॥ व्यासः ॥ कौशेयं कंबलं चैव अजिनं पट्टमेव च ॥ दारुजं तालपत्रं वा आसनं परिकल्पयेत् ॥ कृष्णाजिने ज्ञान-
सिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ॥ वशाजिने व्याधिनाशः कंबले दुःखमोचनम् ॥ अभिचारे नीलवर्णं रक्तं वश्यादिकर्मणि

॥१६॥ शांतिके कंबलः प्रोक्तः सर्वेष्टं चित्रकंबले ॥ वशावंध्यामृगीतिव्याख्यातं मयूखे ॥ जपमालोक्तातंत्रांतरे ॥ अंगुलीगणनादेकं रेखयाष्टगुणं भवेत् ॥ कुशग्रंथ्याकोटिगुणं रुद्राक्षैः स्यादनंतकं ॥ अक्षगणनाप्युक्ताप्रजापतिना ॥ अष्टोत्तरशतं कुर्याच्चतुःपंचाशिकांस्तथा ॥ सप्तविंशतिकं वापितितोनैकाधिकावरा ॥ अवरान्यूना रक्तवर्णैरमिश्रैश्चकीटरंध्रविवर्जितैः ॥ अक्षसूत्रं प्रकर्तव्यं गोपुच्छवलयाकृति ॥ वक्त्रं वक्त्रेण संयोज्य पुच्छं पुच्छेन योजयेत् ॥ मेरुरूर्ध्वमुखः कार्यः प्रत्येकं नागपाशकं ॥ पश्चात्तेन जपं कुर्याद्भवेदुक्तफलं प्रिये ॥ इति नृसिंहपरिचर्यायां ॥ अनामामध्यमाक्रम्य जपं कुर्याच्च मानसं ॥ मध्यमा मध्यमाक्रम्य जपं कुर्यादुपांशुकं ॥ तर्जनीं तु समाक्रम्य जपं नैव हि कारयेत् ॥ एकैकमणिमंगुष्ठेनाकर्षेत्सजपेन्मनुम् ॥ मेरौ तु लंधिते देवि न मंत्र फलभाग्भवेत् ॥ प्रमादात्पतिते सूत्रे जपेदष्टोत्तरं शतम् ॥ पादयोः पतिते तस्मिन्प्रक्षाल्य द्विगुणं जपेत् ॥ इति सूत्रमाला एतच्च गायत्रीजपातिरिक्तजपे ज्ञेयम् ॥ उक्तं च ॥ मालाकरणं ब्रह्मयामले गायत्रीकल्पे च ॥ पर्वभिस्तु जपेद्देवीं माला काम्यजपे स्मृता ॥ गायत्र्यामूलवेदत्वाद्वेदः पर्वसु गीयते ॥ आरभ्यानामिकामध्यं पर्वाण्युक्तान्यनुक्रमात् ॥ तर्जनीमूलपर्यंतं जपेद्दशसु पर्वसु ॥ मध्यमांगुलिमूले तु यत्पर्वद्वितयं भवेत् ॥ तं वै मेरुं विजानीयाज्जपे तं नातिलंघयेत् ॥ मोऽन्यस्मृत्यं ॥ आरभ्यानामिकामूलात्प्रदक्षिण्येन वै क्रमात् ॥ मध्यमामूलपर्यंतं जपेद्दशसु पर्वसु ॥ वृद्धमनुः ॥ वस्त्रेणाच्छादितकरं दक्षिणं यः सदा जपेत् ॥ तस्य स्यात्सफलं जाप्यं तद्धीनमफलं स्मृतम् ॥ अत एव तिर्यक्संचिका कल्पिता केनचिद्बुद्धिमता वृद्धेन जपशीले ॥१६॥

न॥जपार्थेसात्वगोमुरवीतिव्यवह्नियतेलोके॥तस्यास्त्वन्यत्किंचिन्मूलंनपश्यामः॥अथोपस्थानंशौनकः॥सायं
प्रातरुपस्थानंकुर्यान्मंत्रैर्यथाक्रमं॥जातवेदसइत्येकातच्छंयोरावृणीमहे॥नमोब्रह्मण्यइत्येतैरुपतिष्ठेद्दिशं
प्रति॥तत्रैवप्रातःसूर्यमुपस्थायमित्रस्यचर्षणीधृतइति॥भगवान्त्र्यंबकमितिमंत्रेणनमोब्रह्मण्यइत्यथ॥मि
त्रस्यचर्षणीद्वाभ्यांप्रातःकालेविशेषतइति॥गृह्यपरिशिष्टेप्रदक्षिणंदिशःसाधिपास्ताःसंध्यायैनमः॥सावि
त्र्यैनमोगायत्र्यैनमःसर्वाभ्योदेवताभ्योनमस्कृत्य॥ततः॥उत्तमेशिखरेजातेभूम्यांपर्वतमूर्धनि॥ब्राह्मणेभ्योऽभ्य
नुज्ञातागच्छदेवियथासुखमितिसंध्यांविसृज्यभद्रन्नोअपिवातयमनइत्युक्त्वाशांतिंचत्रिरुच्चार्यप्रदक्षिणपरि
क्रामन्नासत्यलोकात्पातालादालोकालोकपर्वतात्॥येसंतिब्राह्मणादेवास्तेभ्योनित्यंनमोनमइतिनमस्कृत्य
भूमिमुपसंगृह्यगुरून्वृद्धांश्चोपसंगृह्णीयादेवंसायं॥अथप्रयोगः॥आसनेउपविश्याचम्यब्रह्मचारीकनिष्ठाना
मिकांगुष्ठैर्गृहस्थःपंचांगुलीभिर्नासांधृत्वावामरंध्रेणवायुमापूर्यनिरोधेनकुंभकेकृते॥प्रणवस्यपरब्रह्मऋषिः॥
परमात्मादेवता॥देवीगायत्रीछंदः॥सप्तानांव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपाऋ
षयः॥अग्निवाय्वादित्यबृहस्पतिवरुणइंद्रविश्वेदेवादेवताः॥गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छंदांसि॥
गायत्र्याविश्वामित्रऋषिः॥सवितादेवता॥गायत्रीच्छंदः॥गायत्रीशिरसःप्रजापतिर्ऋषिः॥ब्रह्माग्निवाय्वादित्यादे
वताः॥यजुश्छंदःप्राणायामेविनियोगः॥ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम्॥ॐ तत्सवितुर्वरे०

नोदयात् ॥ ॐ आपोज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरोम् ॥ एवंत्रिरुक्त्वादक्षिणरंध्रेणवायुंशनैर्विसृज्याचम्यममउ
पात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंप्रातःसंध्यामुपासिष्ये ॥ इतिसंकल्प्यापोहिष्ठेतित्र्यृचेनप्रथममार्जनंकुर्या
त् ॥ तत्रेत्थं आपोहिष्ठेतित्र्यृचस्यांबरीषःसिंधुद्वीपऋषिः ॥ आपोदेवतागायत्रीछंदःमार्जनेविनियोगः ॥ ॐ आपोहि
ष्ठामयोभुवः ॥ ॐ तानऊर्जेदधातन ॥ ॐ महेरणायचक्षसे ॥ ॐ योवःशिवतमोरसः ॥ ॐ तस्यभाजयतेहनः ॥ ॐ
उशतीरिवमातरः ॥ ॐ तस्माअरंगमामवः ॥ ॐ यस्यक्षयायजिन्वथ ॥ ॐ आपोजनयथाचनः ॥ इतिप्रणवयुतै
र्नवभिःपादैःशिरोमार्जयित्वामंत्राचमनंकुर्यात् ॥ हस्तेजलमादाय ॥ सूर्यश्चेतियाज्ञवल्क्यउपनिषदऋषिःसूर्यमा
मन्युमन्युपतिरात्रयोदेवताः ॥ प्रकृतिश्छंदः ॥ मंत्राचमनेविनियोगः ॥ ॐ सूर्यश्चमामन्युश्चमन्युपतयश्चमन्युकृतेभ्यः
॥ पापेभ्योरक्षंतां ॥ यद्रात्र्यापापमकार्षं ॥ मनसावाचाहस्ताभ्यां ॥ पद्भ्यामुदरेणशिश्ना ॥ रात्रिस्तदवलुंपतु ॥ यत्किंचदुरि
तंमयि ॥ इदमहंमाममृतयोनौसूर्येज्योतिषिजुहोमिस्वाहेतिजलंपीत्वा ॥ आचम्य ॥ समस्तव्याहृतीनांप्रजापतिर्ऋ-
षिः ॥ प्रजापतिर्देवता ॥ बृहतीछंदः ॥ गायत्र्याविश्वामित्रऋषिः ॥ सवितादेवता ॥ गायत्रीछंदः ॥ मार्जनेवि० ओमितिप्रथ
मं भूर्भुवःस्वरितिद्वितीयंॐ तत्सवितुरिति गायत्र्यातृतीयंचकृत्वा ॥ आपोहिष्ठेतिनवर्चेनचतुर्थमार्जनंकुर्यात् ॥ ॥१७॥
आपोहिष्ठेतिनवर्चस्यसूक्तस्यांबरीषःसिंधुद्वीपआपोगायत्री ॥ पंचमीवर्धमाना ॥ सप्तमीप्रतिष्ठा ॥ अंत्येद्वेअनुष्टुभौ
मार्जनेविनियोगः ॥ ॐ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरसस्तस्यभा

जयतेहनः॥ उशतीरिवमातरः॥ ॐ तस्माअरंगमामवोयस्यक्षयायजिन्वथ॥ आपोजनयथाचनः॥ ॐ शन्नोदेवीर
भिष्टयआपोभवंतुपीतये॥ शंयोरभिस्रवंतुनः॥ ॐ ईशानावार्याणांक्षयंतीश्चर्षणीनां॥ अपोयाचामिभेषजं॥ ॐ
अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा॥ अग्निंचविश्वशंभुवं॥ ॐ आपःप्रणीतभेषजंवरूथंतन्वे३मम॥ ज्योक्
सूर्यंदृशे॥ ॐ इदमापःप्रवहतयत्किंचदुरितंमयि॥ यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं॥ ॐ आपोअद्यान्वचारिषं
रसेनसमगस्महि॥ पयस्वानग्नआगहितंमासंसृजवर्चसा॥ इतिप्रत्यर्चमोंकारपूर्वकंशिरसिमार्जनंकृत्वाघमर्षणं
कुर्यात्॥ गोकर्णाकारंजलपूर्णंचुलकंनासिकांतंनीत्वाप्राणंनिरुध्य॥ ऋतंचेतित्र्यृचस्याघमर्षणऋषिःभाववृत्तंदे
वता अनुष्टुप्छंदः अघमर्षणेविनियोगः॥ ॐ ऋतंचसत्यंचाभिद्धात्तपसोध्यजायत॥ ततोरात्र्यजायततनःसमुद्रो
अर्णवः॥ समुद्रादर्णवादधिसंवत्सरोअजायत॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी॥ सूर्याचंद्रमसौधातायथा
पूर्वमकल्पयत्॥ दिवंचपृथिवींचांतरिक्षमथोस्वः॥ इतिजपित्वादक्षिणनासाबिलात्पापपुरुषंनिःसारितंभावयन्वा
मभागेजलंक्षिपेत्॥ आचम्यपूर्णोदकांजलिरादित्याभिमुखस्तिष्ठन्गायत्र्याविश्वामित्रऋषिःसवितादेवतागाय
त्रीछंदःसवित्रेऽर्घ्यदानेविनियोगः॥ ॐ भूर्भुवःस्वरितिव्याहृतिपूर्वांसावित्रींपठित्वाश्रीसूर्यायेदमर्घ्यंसमर्पयामि
इतिजलंमूर्ध्वंक्षिपेत्॥ एवंत्रिःकृत्वाअसावादित्योब्रह्मेत्यात्मानंपरिषिच्यगायत्रींजपेत्॥ कुशोदकेनजपस्थानं
प्रोक्ष्यासनंविन्यस्य॥ ॐ भूर्भुवःस्वरोमितिजपित्वासनेपद्मासनेनोपविश्य॥ पृथ्वित्वयाधृतालोकादेवित्वंविष्णुना॥

धृता॥ त्वंचधारयमांदेविपवित्रंकुरुचासनम्॥ अपसर्पंतुतेभूतायेभूताभूमिसंस्थिताः॥ येभूताविघ्नकर्तारस्तेगच्छं
तुशिवाज्ञया॥ अपक्रामंतुभूतानिपिशाचाः सर्वतोदिशं॥ सर्वेषामविरोधेनब्रह्मकर्मसमारभे इतिभूतशुद्धिंकृत्वाच-
म्यप्राणानायम्यत्रयंकृत्वापुनराचम्यात्मानंव्याहृतिभिरभ्युक्ष्यगायत्र्याविश्वामित्रऋषिः सविता देवता गायत्री
च्छंदः गायत्रीजपेविनियोगः॥ ॐ तत्सवितुर्हृदयायनमः॥ वरेण्यंशिरसेस्वाहा॥ भर्गोदेवस्यशिखायैवषट्॥ धीमहि
कवचायहुं॥ धियोयोनःनेत्रत्रयायवौषट्॥ प्रचोदयात् अस्त्रायफट्॥ अस्त्रेणैवदिग्बंधनंकृत्वादेवतांध्यायेत्॥
बालांबालादित्यमंडलमध्यस्थांरक्तवर्णांरक्तांबरानुलेपनस्रगाभरणांचतुर्वक्त्रांदंडकमंडल्वक्षसूत्राभयांकचतुर्भु
जांहंसासनारूढांब्रह्मदैवत्यामृग्वेदमुदाहरंतींभूर्लोकाधिष्ठात्रींगायत्रींनामदेवतांध्यात्वा॥ आगच्छ वरदेदेविजपे
मेसन्निधौभव॥गायंतंत्रायतेयस्माद्गायत्री त्वंततः स्मृता॥ इतिआवाह्य॥ मनसासंपूज्याष्टोत्तर सहस्रमष्टोत्तर
शतमष्टाविंशतिंवा॥ आपत्सुदशवारंवागायत्रींजपित्वापुनः षडंगंन्यासंविधायोपस्थानंकुर्यात् जातवेदसेमारी
चः कश्यपोजातवेदाअग्निस्त्रिष्टुप् उपस्थानेविनियोगः॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः
॥सनः पर्षदतिदुर्गाणिविश्वानावेवसिंधुं दुरितात्यग्निः॥ मित्रस्येतिचलस्तृणांगाथिनोविश्वामित्रःसवितागायत्रीउप
स्थानेविनि०॥ ॐ मित्रस्यचर्षणीधृतो वोदेवस्यसानसि॥ द्युम्नंचित्रश्रवस्तमं॥ अभियोमहिनादिवंमित्रोबभू ॥१८॥
वसप्रथाः॥ अभिश्रवोभिः पृथिवीं॥ मित्रायपंचयेमिरे जनाअभिष्टिशवसे॥ सदेवान्विश्वान्बिभर्ति॥ मित्रोदेवेष्वा

सुरुजनायवृक्तबर्हिषे॥ इषइस्वधृताअकः॥ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप्‌उपस्थानेविनियोगः॥ ॐ त्र्यंबकंयजामहेसु
गंधिंपुष्टिवर्धनं॥उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात्॥ तच्छंयोः शंयुर्विश्वेदेवाः शक्करीउपस्थानेविनियोगः॥
ॐ तच्छंयोरावृणीमहेगातुंयज्ञायगातुंयज्ञपतयेदैवीस्वस्तिरस्तुनः स्वस्तिर्मानुषेभ्यः॥ऊर्ध्वंजिगातुभेषजं॥शन्नो
अस्तुद्विपदेशंचतुष्पदे॥ नमोब्रह्मणेप्रजापतिर्विश्वेदेवाजगतीउपस्थानेवि०॥ॐ नमोब्रह्मणेनमोअस्त्वग्नयेनमः
पृथिव्यैनमओषधीभ्यः॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि॥ नमः प्राच्यैदिशेयाश्चदेवताःए
तस्यांप्रतिवसंत्येताभ्यश्चनमः॥ नमोदक्षिणस्यैदिशेयाश्च०॥ नमः प्रतीच्यैदिशेया०॥ नमउदीच्यैदिशेया०॥नम
ऊर्ध्वायैदिशेया०॥नमोऽधरायैदिशेया०॥नमोवांतरायैदिशेया०॥ संध्यायैनमः॥ गायत्र्यैनमः॥ सावित्र्यैनमः
॥सरस्वत्यैनमः॥ सर्वाभ्योदेवताभ्योनमोनमः॥ कामोकार्षीन्मन्युरकार्षीन्नमोनमः॥ उत्तमेशिखरेजातेभूम्यां
पर्वतमूर्धनि॥ ब्राह्मणेभ्योभ्यनुज्ञातागच्छदेवियथासुखं॥ भद्रन्नोअपिवातयमनः॥ ॐ शांतिरितित्रिरुक्त्वा
प्रदक्षिणंपरिक्रामन्नासत्यलोकात्पातालादालोकालोकपर्वतात्॥ येसंतिब्राह्मणादेवास्तेभ्योनित्यंनमोनमइ
तिगुरूनभिवादयेत्॥ स्वस्तिकाकारहस्ताभ्यांकर्णौस्पृष्ट्वा॥ आंगिरसबार्हस्पत्यभारद्वाजेतित्रिप्रवरान्वितभारद्वा
जगोत्रोत्पन्नोहंश्रीधरशर्माभोगुरोत्वामभिवादयामि॥ इतिस्वस्वप्रवरानुच्चार्याभिवाद्यहरिरात्र्चमनंकुर्यादिति।
अथोपासनंदक्षः॥ संध्याकर्मावसानेतुस्वयंहोमोविधीयते॥ स्वयंहोमेफलंयत्स्यात्तदन्येननलभ्यते॥ अशक्तंत्व

आ० हु सएव॥ ऋत्विक्पुत्रोगुरुर्भ्राताभागिनेयोथविट्पतिः॥ एतैरपिहुतंयत्स्यात्तद्धुतंस्वयमेवतु॥ पत्नीकन्याचजुहुया कं०
॥१९॥ द्विनापर्युक्षणक्रियामिति॥ विट्पतिर्जामाता॥ आश्वलायनः॥ स्वयंपत्न्यपिवापुत्रःकुमार्यंतेवासीवेति॥ अत्रऋत्वि
गादिना असमक्षंतुदंपत्योर्होतव्यंनर्त्विगादिना॥ द्वयोरप्यसमक्षंहिभवेद्धुतमनर्थकम्॥ सन्निधौयजमानःस्यादुद्दे
शत्यागकारकः॥ असन्निधौतुपत्नीस्यादुद्देशत्यागकारिका॥ असन्निधौतुपत्न्याःस्यादध्वर्युस्तदनुज्ञया॥ उन्मा
देप्रसवेचर्त्तौकुर्वीतानुज्ञयाविनेति कात्यायनोक्तेः॥ उभयोःसमक्षंहोतव्यमितिमुख्यःकल्पःअन्यतरसन्निधौ
त्वनुकल्पः॥ द्वयोरप्यसमक्षंहुतंव्यर्थंस्यात्॥ शातातपः॥ श्रौतंपत्न्यास्वयंकुर्यादन्योपिस्मार्तमाचरेत्॥ अशक्तौ
श्रौतमप्यन्यःकुर्यादाचारमंततः॥ पर्वणितुसायंहोमः प्रतिपत्प्रातर्होमश्चस्वयमेवकार्योनर्त्विगादिना॥ स्वयंपर्व
णिजुहुयादृत्विजामेकइतरंकालमितिसूत्रात्॥ अत्रसायमुपक्रम्यप्रातरपवर्गमयुज्यतेऋत्विजामेकः। कश्चिदृत्वि
गितरस्मिन्कालेग्निहोत्रहोमंकुर्यादित्यर्थः अत्रापिहोमकरणासमर्थस्यप्रतिनिधिनाहोमोज्ञेयः॥ भरद्वाजः॥ होमंवैता
निकंकृत्वास्मार्तंकृत्वाविचक्षणः॥ स्मृतीनांवेदमूलत्वात्स्मार्तंकेचित्पुराविदुरिति॥ अग्निप्रादुष्करणमपिकात्यायनः॥
सूर्येतुशैलमप्राप्तेषट्त्रिंशद्भिरिहांगुलैः॥ प्रादुष्करणमग्नीनांप्रातर्भासामदर्शने॥ प्रादुष्करणमग्निप्रज्वलनम्॥ अस्यानु
कल्पकर्तॄनाह॥ सएव॥ दुहित्रास्नुषयावाग्निविहारोनविरुध्यते॥ निर्लेपनंचपात्राणामुपलेपनमर्चनमिति॥ विहारो- ॥१९॥
विहरणंप्रादुष्करणमितियावत्॥ प्रादुष्करणकालात्ययेसमस्तव्याहृतिभिरेकाज्याहुति :कार्या॥ तथाचकारिका॥

प्रायश्चित्तविशेषेणयत्रनोक्तोभवेद्विधिः॥ होतव्याज्याहुतिस्तत्रभूर्भुवःस्वरितीतिचेति॥ ॥अथहोमकालः॥ ॥
कात्यायनः॥ यावत्सम्यङ्नभाव्यंतेनभस्यृक्षाणिसर्वतः॥ लोहितत्वंचनापैतितावत्सायंतुहूतये॥ आचार्योपि॥ सम्य
ङ्गिम्लोचतिसूर्योसायंचजुहुयुस्तदा॥ अथप्रातर्हुनेनित्यमुदितेर्केयथाविधीति॥ मनुः॥ उदितेनुदितेचैवसमयाध्युषितेत
था॥ सर्वथावर्ततेयज्ञइतीयंवैदिकीश्रुतिरिति॥ एषांस्वरूपंछंदोगपरिशिष्टे॥ रेखामात्रंमदृश्येतरश्मिभिस्तुदिवाकरः
॥ उदितंतंविजानीयात्तत्रहोमंप्रकल्पयेत्॥ रात्रेस्तुषोडशेभागेग्रहनक्षत्रभूषिते॥ कालंत्वनुदितंज्ञात्वाहोमंकुर्याद्विचक्ष
णः॥ प्रभातसमयेनीतेनष्टेनक्षत्रमंडले॥ रविर्यावन्नदृश्येतसमयाध्युषितंचतदिति॥ आहसूत्रकारः॥ प्रदोषांतोहो
मकालःसंगवांतःप्रातस्तमनिनीयचतुर्गृहीतमाज्यंजुहुयाद्यदिसायंदोषावस्तर्नमःस्वाहेतियदिप्रातःप्रातर्वस्तर्नमः
स्वाहेत्यग्निहोत्रमुपसाद्यभूर्भुवःस्वरितिजपित्वावरंदत्त्वाजुहुयादिति॥ अत्रवृत्तिकृदाह॥ प्रदोषोनामरात्रेःपूर्वश्चतु
र्थःप्रदोषस्यअंतःप्रदोषांतःप्रदोषांतोंतोयस्यसःप्रदोषांतांतःप्रदोषांतांतइत्यर्थःससायंहोमस्यकालःकेषांचित्सं
ध्यासमीपस्थषष्ठोनाडिकेप्रदोषशब्देनोच्यते॥ तदंतोवासायंहोमकालःसंगवांतःप्रातरिति॥ यस्मिन्कालेगावोवत्सैःसह
आयंतेससंगवःकालःतावत्पर्यंतंप्रातर्होमसमयः॥ केचिदन्हस्तृतीयभागःसंगवइत्याहुः॥ तदंतःसंगवांतःद
शनाडिकाइत्यर्थः॥ अस्तमितेउदितेचविहितेहोमएवतावतिकालेक्रियमाणेतीनकालोनभवतीति॥ पुनःकाल
विधिस्तमनिनीयचतुर्गृहीतमाज्यंजुहुयादिति॥ प्रायश्चित्तंविनाकृतमप्यकृतमित्याहपुलस्त्यः॥ अकालेयत्कृतं

कर्मकालंप्राप्यपुनःक्रिया॥ कालातीतंतुयत्कुर्यादकृतंतद्विनिर्दिशेदिति॥ अकालेअनागतकालेकालातीतंप्राय
 श्चित्तरहितंकुर्याच्चेदकृतमेवेत्यर्थः॥ दर्शपूर्णमासस्थालीपाकयोरपिज्ञेयः तत्रप्रायश्चित्तंकृतादुक्तम्॥ अ
ग्नयेपथिकृतेपुरोडाशंनिर्वपेद्योदर्शपूर्णमासयाजीसन्नमावास्यांपौर्णमासींवातीया दिति॥ एतदपियावद
न्यस्यपर्वणोनकालस्तत्रायंप्रायश्चित्तमेवनपुनःपुनरपियन्नानुष्ठानं अधिकारांतराविरोधेनपूर्वाधिकार
निवृत्तेः॥ उक्तंचभाष्यकारेण॥ ततोदर्शपूर्णमासंवायावदन्योनपर्वकालइति॥ अत्रसर्वत्रहविरुत्पादनाद्यंप्रज
नमपिहोमकालएवकार्यं॥ योहोमकालःसोंगानामित्यापस्तंबस्मरणात्॥ अथहोमद्रव्यसंस्कारादिकारिका
यां॥ पयःप्रभृतिषुत्वेकंसंस्कुर्यादग्निहोत्रवत्॥ अलंकारोतिगंधाद्यैरन्नलाचतनंततः॥ द्रव्यंहरिःस्रुवेणैवपाणि
नाकठिनंहविः॥ जुहुयादग्नयेस्वाहासकृत्समिद्धेहुताशने॥ ध्यात्वाशब्दंचतुर्थ्यंतंप्रजापतयइत्यथ॥ स्वाहाका
रेणाजुहुयात्ततःपरिसमूहनम्॥ पर्युक्षणंचकुर्वीतप्रातरप्येवमिष्यते॥ व्युष्टायांज्वलयेदनंसायंहोमःकृतःपु
रा॥ पयसान्येनवाप्रातस्तैनैवेत्याहवृत्तिकृत्॥ पूर्वमंत्रस्तुसूर्यायस्वाहेत्यन्यत्समंभवेदिति॥ होमेउत्तराहुति
हवनप्रकारमाह सूत्रकारः॥ उत्तरांतूष्णींभूयसीमसंसृष्टांप्रागुदगुत्तरतोवाप्रजापतिंमनसाध्यायेत्तूष्णींहो
मेषुसर्वत्रेति॥ विष्णुः॥ बहुशुष्कैंधनेचाग्नौसकृत्समिद्धेहुताशने॥ विधूमेलेलिहानेचहोतव्यंकर्मसिद्धये॥ योन 
र्चिंषिजुहोत्यग्नौव्यंगारेचैवमानवः॥ मंदाग्निरामयावीचदरिद्रश्चापिजायते॥ अग्निसमिंधनंस्रुवेणकार्यं तदु

क्तं संग्रहे धमनीमंतरं कृत्वा तृणं वा काष्ठमेव वा ॥ मुखेनाग्निं समिंधीत मुखादग्निरजायतेति ॥ अत्राहुतिक्षेपा
त्पूर्वं समिधमप्यादध्यात् ॥ जान्वाच्य समिधमादध्यात्प्रदीप्तां द्व्यंगुलमात्रेभिजुहुयादिति सूत्रात् ॥ होम्यानि गृ
ह्यपरिशिष्टे ॥ पयो दधि सर्पिर्यवागूरोदनं तंडुलाः सोमस्तंडुलमापो व्रीहयो यवास्तिला इति होम्यानि यवाग्वो
दनयोः श्रपणं तु लौकिकेग्नौ कार्यं यवागूरोदनेति सिद्धस्य निर्देशात् ॥ बौधायनः ॥ व्रीहीणां वा यवानां वा शतमा
हुतिरिति श्रूयत इति ॥ संग्रहे ॥ द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः ॥ अंगुल्यग्रैर्न होतव्यं न कुर्यांगुलिभेदनं ॥ अं
गुल्युत्तरपार्श्वेण होतव्यमिति तु स्मृतिरिति ॥ उपस्थानमंत्रानाह ॥ शौनकः ॥ परिसमुह्य पर्युक्ष्याप्युपतिष्ठेद्विभु
जं ॥ अग्नेः सूक्तैश्च सौरैश्च प्राजापत्यैश्च नित्यशः ॥ अग्निं प्रजापतिं सायं प्रातः सूर्यं प्रजापतिं ॥ अग्न आयूंषीति त्रि
सृभिर्द्वाभ्यामग्ने त्वमित्यथ ॥ सूर्यो न इति मंत्रेण तद्वदुत्यं च द्वितीयया ॥ तृतीयया चित्रमिति नमो मित्रस्य चान्यथा ॥
प्रजापते नत्वदत्वा तंतुं तन्वद्वितीयया ॥ हिरण्यगर्भः समिति तद्वत्पतिष्ठेद्धुताशनमिति ॥ एतत्परिचरणमायतने
स्थंडिले वा अग्निं प्रतिष्ठाप्य कार्यं कुंडे वा स्थंडिले वापि इति वचनात् आयतननिर्माणप्रकारः संग्रहे ॥ अरत्निमात्र
मप्यर्धे कार्यमायतनं बुधैः ॥ पिशीलमात्रमित्येके तदप्यं सांतरं भवेदिति ॥ अरत्निः सार्द्धद्वाविंशत्यंगुलात्मकः अरत्निश
ब्देन हस्तोपि प्रोक्तः पंचारत्निः पुरुषो भवतीति श्रुत्या अरत्निशब्दस्य हस्तपरदर्शनात् ॥ अत एव अस्मन्मातुः पितामह
श्रीनारायणभट्टचरणैः प्रयोगरत्ने चतुर्विंशत्यंगुलं सार्द्धद्वाविंशत्यंगुलप्रमाणं षोडशांगुलप्रमाणं वायतनमित्युक्त

आ० म्॥ तथापितच्छ्रौताग्निकुंडोक्तंग्राह्यम् तद्यथा अष्टादशांगुलंकुंडंविंशत्यंगुलमेववा॥ चतुर्विंशत्यंगुलंचषट्त्रिं- कुं०
॥२१॥ शदंगुलात्मकं॥ श्रौतायतनविस्तारोमेखलैकानदर्धतः॥ चतुर्थांशैर्द्वितीयास्याद्विस्तृताचतुरंगुला॥ चतुर्थांशैर्वि
स्तारश्चतुर्थांशैरित्यर्थः॥ द्वितीयाविस्तृताकार्याद्व्यंगुलातंत्रवेदिभिः॥ अयंद्विमेखलापक्षःकात्यायनातिरिक्तानांते
षांत्वेकमेखलापक्षएव॥ तदुक्तंशुल्बे॥ द्वादशांगुलमुच्छ्रायोविस्तारश्चतुरंगुलः॥ एकैवमेखलाप्रोक्ताकात्याय
नमतेकिल॥ द्वितीयमेखलोच्छ्रायविस्तारौतुतदर्धतः॥ कात्यायनातिरिक्तानांमेखलाद्वयमुच्यतइति॥ अथौपा
सनप्रयोगः॥ आयतनेस्थंडिलेवाप्रादुष्कृतस्याग्नेः पश्चात्कृतसंध्यावंदनोगृहीउपविश्यप्राणानायम्यदेशकालौ
निर्दिश्यश्रीपरमेश्वरप्रीत्यर्थंसायमौपासनहोमंकरिष्येइतिसंकल्प्य॥ चत्वारिशृंगागौतमोवामदेवोग्निस्त्रिष्टुप्
अग्निमूर्तिध्यानेविनियोगः॥ ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य॥ त्रिधाबद्धोवृषभोरो
रवीतिमहोदेवोमर्त्यांआविवेश॥ इतिध्यात्वाग्नेरीशानींदिशमारभ्यप्रदक्षिणंसमंतात्सोदकेनदक्षिणेनपाणिना
त्रिःपरिसमुह्यकुशैःपरिस्तीर्यत्रिःपर्युक्ष्यप्रागुक्तद्रव्यमध्येयत्किंचिद्द्रव्यंपात्रेकृत्वा तत्सात्रमुत्तरतोग्नेर्निधायज्व
लतादर्भेणावज्वल्यप्रोक्ष्यतेनैवोल्मुकेनत्रिःपर्यग्निकृत्वा तदुल्मुकंनिरस्यापःस्पृष्ट्वाग्नेः पश्चाद्दर्भेषुसमिधासहह
विर्निधाय॥ निश्वाचनइतित्र्यृचस्य आत्रेयोवसुश्रुतोग्निस्त्रिष्टुप्॥ द्वयोर्न्तेअंत्यायाउ परस्थानेविनि०॥ ॐ वि- ॥२१॥
श्वानिनोदुर्गहाजातवेदः॥ ॐ सिंधुंननावादुरितातिपर्षि॥ ॐ अग्नेअत्रिवन्नमसागृणानः॥ ॐ अस्माकंबोध्यवि

नानानूनां॥ ॐ यस्त्वाहृदाकीरिणामन्यमानः॥ ॐ अमर्त्यंमर्त्योजोहवीमि॥ ॐ जातवेदोयशोअस्मासुधेहि॥ ॐ प्रजा
भिरग्नेअमृतत्वमश्यां॥ ॐ यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं॥ अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिन्नशा
तेस्वस्ति॥ इतिदक्षिणंजान्वाच्यसमिधमग्नौक्षिस्वापः स्पृष्ट्वासमिधप्रदीप्तायांविधूमज्वालांगारेग्नौकठिनंहविः पाणि
नांगुल्युत्तरपार्श्वेनद्रवंहविः स्रुवेणसमिन्मूलतोद्व्यंगुलप्रदेशेसव्यंपाणिंहृदिनिधाय॥ ॐ अग्नयेस्वाहाइतिहुत्वा अ
ग्नयइदंनममेतित्यक्त्वा पूर्वाहुतेरैशान्यांउत्तरस्यांवापूर्वाहुतेर्भूयसीमाहुतिंप्रजापतिपदंचतुर्थ्यंतंमनसाध्यायन्स्वा
हेत्युपांशूच्चार्यासंसृष्टांहुत्वाप्रजापतयइदंनममेतित्यक्त्वापरिस्तरणंविसृज्यपरिसमूहनपर्युक्षणेकृत्वोपस्थानंकु
र्वीत॥ तत्रमंत्राः॥ अग्नआयुंषीतिमंत्रत्रयस्यशतवैखानसाःपवमानोग्निर्गायत्री॥ अग्न्युपस्थानेवि०॥ ॐ अग्नआ
यूंषिपवसआसुवोर्जमिषंचनः॥ आरेबाधस्वदुच्छुनां॥ अग्निर्ऋषिः पवमानः पांचजन्यः पुरोहितः॥ तमीमहेमहा
गयं॥ अग्नेपवस्वस्वपाअस्मेवर्चःसुवीर्यं॥ दधद्रयिंमयिपोषं॥ अग्नेत्वन्नइतिचतसृणांगौपायनालौपायनावाबं
धुःसुबंधुःश्रुतबंधुर्विप्रबंधुः क्रमेणाग्निर्द्विपदाविराट् अग्न्युपस्थानेविनियोगः॥ ॐ अग्नेत्वन्नोअंतमउतत्राता
शिवोभवावरूथ्यः॥ वसुरग्निर्वसुश्रवाअच्छानक्षिद्युमत्तमंरयिंदाः॥ सनोबोधिश्रुधीहवमुरुष्याणोअघायतःस
मस्मात्॥ तंत्वाशोचिष्ठदीदिवःसुम्नायनूनमीमहेसखिभ्यः॥ प्रजापतेर्हिरण्यगर्भःप्रजापतिस्त्रिष्टुप्॥ प्रजाप
त्युपस्थानेविनियोगः॥ ॐ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोअ

सुवयंस्यामपतयोरयीणाम्॥ तंतुंतन्वन्देवाअग्निर्जगती अग्न्युपस्थानेविनियोगः॥ ॐ तंतुंतन्वन्रजसोभानुमन्वि
हिज्योतिष्मतः पथोरक्षधियाकृतान्॥ अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनं॥ हिरण्यगर्भइत्यस्यहि
रण्यगर्भःप्रजापतिस्त्रिष्टुप्॥ प्रजापत्युपस्थानेविनियोगः॥ ॐ हिरण्यगर्भःसमवर्तताग्रेभूतस्यजातःपतिरेकआ
सीत्॥ सदाधारपृथिवींद्यामुतेमांकस्मैदेवायहविषाविधेम॥ एतैर्मंत्रैर्वायव्यदेशेप्रव्हस्तिष्ठन्नुपतिष्ठेत्॥ ततउपवि
श्य॥ मानस्तोकइतिकुत्सोरुद्रोजगती॥ विभूतिग्रहणेविनियोगः॥ ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअ
श्वेषुरीरिषः॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे॥ त्र्यायुषंजमदग्नेरितिललाटे॥ कश्यप
स्यत्र्यायुषंकंठे॥ अगस्त्यस्यत्र्यायुषंनाभौ॥ यद्देवानांत्र्यायुषंदक्षिणस्कंधे॥ तन्मेअस्तुत्र्या०वामस्कंधे॥ सर्वमस्तु
शतायुषंशिरसि॥ न्यूनातिरिक्तदोषपरिहारार्थं प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत्॥ स्मरणादेवतद्विष्णोः
संपूर्णंस्यादितिश्रुतिरितिवचनाद्विष्णुंस्मृत्वाकर्मेश्वरार्पणंकुर्यात् इतिसायमौपासनप्रयोगः॥ एवमेवप्रातरपि
पूर्वांगानिकृत्वा॥ सूर्यायस्वाहेतिसायंद्रव्येणैवप्रथमाहुतिंहुत्वा सायंकालीनद्वितीयाहुतिवद्द्वितीयाहुतिंहुत्वाप
रिसमूहनादिसर्वंप्राग्वत्कुर्वीत॥ उपस्थानेविशेषः॥ सूर्योनोदिवस्पात्वित्यस्यचक्षुःसूर्योगायत्री॥ सूर्योपस्था
नेविनियोगः॥ ॐ सूर्योनोदिवस्पातुवातोअंतरिक्षात्॥ अग्निर्नःपार्थिवेभ्यः॥ उदुत्यंकण्वःप्रस्कण्वःसूर्योगाय ॥२२॥
त्री सूर्योपस्थानेविनियोगः॥ ॐ उदुत्यंजातवेदसंदेवंवहंतिकेशवः॥ दृशेविश्वायसूर्यं॥ चित्रंदेवानामांगिरसःकुत्सः

सूर्यस्त्रिष्टुप् ॥ सूर्योपस्थाने विः ॥ ॐ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षं
सूर्यआत्माजगतस्तस्थुषश्च ॥ नमोमित्रस्येतिसौर्योभितपाःसूर्योजगती ॥ सूर्योपस्थानेविनियोगः ॥ ॐ नमोमित्रस्य
वरुणस्यचक्षसेमहोदेवायतदृतंसपर्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्यायशंसत ॥ एतैश्चतुर्भिःसूर्यंप्र
जापतेरीइहिरण्यगर्भइतिद्वाभ्यांप्रजापतिंचोपतिष्ठेदितिप्रातर्विशेषः ॥ अथप्रसंगात्किंचिद्दर्शाग्निविषयेप्रोच्यते होमका
लेशम्यादेशादर्वाक्बहिरायतनाद्गतश्चेदग्निःसचेत्प्रायश्चित्तसमाप्तिपर्यंतंस्थितिसमर्थस्तदाइदंतएकंपरऊतएक
मितिबह्वृचमंत्रेणायतनेप्रक्षिप्य व्यस्तसमस्तव्याहृतिभिश्चतस्त्रआज्याहुतीर्जुहुयात् ॥ जीवनासमर्थः स्फु
लिंगसमरूपदापिनदोषइतिभावः ॥ शम्यादेशादपिबहिरुपक्षीयगतेग्नौपथिकृतेग्नयेचरुःकार्योथवा अग्नयेपथिकृ
तेस्वाहेतिपूर्णाहुतिःकार्या ॥ तदुक्तंकारिकायां ॥ अर्वाक्शम्यापरासात्तुबहिरायतनाद्गतः ॥ प्रायश्चित्तसमाप्त्यंतंस
मर्थोजीवितुंयदि ॥ इदंतइत्यृचातस्यस्थानेग्निंप्रक्षिपेत्पुनः ॥ आज्याहुतीश्चजुहुयाद्व्याहृत्यारव्यैश्चपूर्ववत् ॥ अति
क्रांतोयदाशम्यापरासमनलोभवेत् ॥ चरुःपथिकृतेकार्यःपूर्णाहुतिरथापिवा ॥ पूर्णाहुतिलक्षणंतत्रैव ॥ आज्यं
द्वादशकृत्वस्स्रुग्गृहीत्वापूरयेत्स्रुचम् ॥ तयाचाज्याहुतिःकार्यासापूर्णाहुतिरिष्यते ॥ स्रुवपूर्णाहुतिर्वास्यादित्ये
केयाज्ञिकाविदुरिति ॥ आयतनात्षट्त्रिंशदंगुलात्मकोदेशःशम्या ॥ शम्याषट्त्रिंशदंगुलेत्यापस्तंबस्मरणात् ॥ आय
तनभंगेनस्थलसंकोचादिनावास्थलांतरेग्निनयनप्रसक्तौप्रकारउक्तस्त्रिकांडमंडनेन ॥ प्रत्यक्षेणनयन्नग्निमु

च्छ्वसेच्चेत्तु नश्यति ॥ यदिवानुच्छ्वसन्नीत्वानिधायोच्छ्वस्य तंपुनश्चाहरेदनुच्छ्वसन्नेवंनश्येत्त्रिर्हरणेनलः ॥श
कटेनातिदूरंवाहरेद्देशंयथारुचि ॥ स्वांगेनवाथवाशम्यापरासात्प्राङ्गयेच्छ्वसन् ॥ कर्मार्थेनयनेग्नीनांनानुच्छ्वा
सादिर्नोद्यते ॥ नदीसंतरणेग्नीनांसीमातिक्रमणेतथा ॥ सर्वत्राद्यंतसीम्नोर्वास्वामिस्पृष्टाःस्युरग्नयः ॥ प्रत्यक्षमरणिद्वारं
नान्यथाग्निविनाशनमिति ॥ अन्यान्यपिप्रायश्चित्तानिविस्तारभीत्येहनप्रदर्शितानीतिसंक्षेपः ॥ अथोपवसथ्येवर्ज्या
न्याहजाबालिः ॥ कोविदारान्कुलित्थांश्चवर्जयेत्कोद्रवांस्तथा ॥ अनृतंबहुवादंचक्रयविक्रयमेवच ॥ दंतशोचंचपूर्वे
द्युर्यागस्यैतानिवर्जयेत् ॥ मसूरान्लवणान्क्षारांश्चणकान्कोरदूषकान् ॥ माषान्मधुपरान्नंचवर्जयेत्पर्वणिद्विजइ
ति ॥ अथपुनराधाननिमित्तानि ॥ विहायाग्निंसभार्यश्चेत्सीमामुल्लंघ्यगच्छति ॥ होमकालात्ययेतस्यपुनराधा
नमिष्यते ॥ अत्रसीमागृहसीमानतुग्रामसीमातदुक्तंत्रिकांडमंडनेन ॥ विहार कालेयदिकार्यलोभात्पत्नींतुसीमानमती
त्यगच्छेत् ॥ निःसंशयोग्निःखलुनाशमेतिगृहस्यसीमात्रविवक्षतोर्थइति ॥ शौनकः ॥ अग्नावनुगतेयत्रहोमकालद्व
यंव्रजेत् ॥ उभयोर्विप्रवासेवालौकिकोग्निर्विधीयते ॥ भगवान् ॥ प्रोषितेतुयदापत्नीयदिग्रामांतरंव्रजेत् ॥ होमकाले
यदिप्राप्तानसादोषेणयुज्यते ॥ अथतत्रैववसतिहोमकालव्यतिक्रमः ॥ लौकिकोग्निर्विधीयेतकाठकश्रुतिदर्श
नात् ॥ पैठीनसिः प्रसव लीकृतधर्मस्यपीड्यमानस्यशत्रुभिः ॥ मासद्वयंप्रवासोस्तिपरतोनाहिताग्निवत् ॥ मा
सद्वयस्योपरिआहिताग्नेरनाहिताग्निवत्प्रवासोनास्तीतितुर्यपादार्थः ॥ मासद्वयावधिप्रवासेहोमार्थंद्विजंप

रिकल्प्यप्रवसेदित्याह कात्यायनः॥ निक्षिप्याग्निंस्वदारेषुपरिकल्प्यार्त्विजंतथा॥ प्रवसेत्कार्यवान्विप्रोवृथैवनचिरंवसेदिति॥ अत्रकार्यवानितिधनार्थीनतुनपोर्थी॥ धनान्यर्जयितुंयुक्तःप्रवासोत्वग्निहोत्रिणः॥ धनैर्यत्नंभवेदिज्यातपाद्यर्थंनतुव्रजेदितिसत्यव्रतस्मरणात्॥ साग्निकविषयेत्रिकांडमंडनआह॥ अग्निहोत्रेणरहितःपंथानंशतयोजनम्॥ साग्निस्तुप्रतियात्येवमग्निहोत्रंविनश्यति॥ अत्रप्रवासकालेआगमनकालेविशेषस्तथातिपन्नादिहोमकालश्चजागरूकेऽस्मन्मातुःपितामहश्रीनारायणरचितेप्रयोगरत्नेद्रष्टव्यइतिदिक्॥

अथपूजाविधिर्मात्स्ये॥ ॥प्रातर्मध्यंदिनेसायंदेवपूजांसमारभेत्॥ अशक्तोविस्तरेणैवप्रातःसंपूज्यकेशवम्॥ मध्यान्हेनैवसायंचपुष्पांजलिमपिक्षिपेत्॥ स्कांदे॥ कामासक्तोथवाक्रुद्धःशालिग्रामशिलार्चनात्॥ भक्त्यावायदिवाभक्त्याकलौमुक्तिमवाप्नुयात्॥ शिलाप्युक्ताप्रयोगपारिजाते॥ शिलाप्यामलकीतुल्यापूज्यासूक्ष्मैवयाभवेत्॥ यथायथाशिलासूक्ष्मातथास्यात्तुमहत्फलम्॥ तस्यांसांपूजयेन्नित्यंधर्मकामार्थसिद्धये इति॥ तत्रैवस्कांदे शिवनाभिरुक्तः॥ यवमात्रंतुगर्तःस्याद्यवार्द्धंलिंगमुच्यते॥ शिवनाभिरितिख्यातस्त्रिषुलोकेषुदुर्लभः॥ वासुदेवमयंक्षेत्रंलिंगंशिवमयंस्मृतं॥ तस्माद्धरिहरक्षेत्रेपूजयेच्छंकराच्युतौ॥ श्रीभारते॥ कलौकलिमलध्वंसंसर्वपापहरंहरिम्॥ येर्चयंतिनरानित्यंतेपिवंद्यायथाहरिः॥ ब्रह्माकृतयुगेदेवस्त्रेतायांभगवान्हरिः॥ द्वापारेभगवान्विष्णुःकलौदेवोमहेश्वरः॥ पूज्यइतिभावः॥ शिवपूजनंबाणलिंगेति

प्रशस्तमित्युक्तंभविष्ये॥ बाणलिंगानिराजेंद्रख्यातानित्रिभुवनत्रये॥ नप्रतिष्ठानसंस्कारस्तेषामावाहनंनचेति
॥ हेमाद्रौ॥ पक्वजंबूफलाकारंकुक्कुटांडसमाकृति॥ भुक्तिमुक्तिप्रदंचैवबाणलिंगमुदाहृतम्॥ श्रीसूर्यपूजो
क्ताभविष्यपुराणे॥ प्रातःसंध्यावसानेतुनित्यंसूर्यंसमर्चयेत्॥ यःसूर्यंपूजयेद्भक्त्यात्रिमूर्तेःपूजकोभवेत्॥
अग्निहोत्रादिवेदाश्चयज्ञाश्चबहुदक्षिणाः॥ सूर्यार्चनस्यचैवैतेकोट्यंशेनापिनोसमाः॥ मेरुमंदारतुल्योपिराशिः
पापस्यदारुणः॥ आराध्यभास्करंमर्त्यस्तन्नाशयतितत्क्षणात्॥ प्रदद्याद्वैगवांलक्षंदोग्ध्रीणांवेदपारगे॥ एका
हमर्चयेद्भानुंतस्यपुण्यंततोधिकम्॥ गृहस्थस्यपंचायतनपूजोक्तापरशुरामनिबंधे कूर्मपुराणे॥ स्नानंसंध्यां
ततोहोमंग्रहस्थोक्तेनवर्त्मना॥ कृत्वासूर्यंगणपतिंलक्ष्मीमीशंतथाहरिं॥ पौरुषेणतुसूक्तेननित्यमर्चांसमार
भेत्॥ अर्चनंमूलमंत्रेणवाकार्यम्॥ मूलमंत्रलक्षणंगारुडे॥ प्रणवादिनमोंतंचचतुर्थ्यंतंचसत्तम॥ देवतायाः
स्वकंनामभूलमंत्रःप्रकीर्तितः॥ ब्राह्मेपि॥ ॐकारादिसमायुक्तंनमस्कारांतकीर्तनम्॥ स्वनामसर्वसत्वानांमं
त्रइत्यभिधीयते॥ ॐसूर्यायनमइत्यादि॥ वाजपेययाजिनस्तुश्लिष्टमंत्रेणपंचायतनपूजनमित्याहुः॥ युक्तंतु॥
ऋगंतेश्लिष्टमंत्रमुच्चार्यपाद्यादिनिवेदयेदिति॥ पंचायतनप्रकारोज्ञानमालायाम्॥ सहस्रांशुर्यदामध्येईशान्यांपा
र्वतीपतिम्॥ आग्नेय्यामेकदंतंचनैर्ऋत्यामच्युतंतथा॥ वायव्यांपूजयेद्देवींभोगमोक्षैकभूमिकामितिसूर्यपंचाय ॥२५॥
तनम्॥ हेरंबंतुयदामध्येईशान्यामच्युतंजयेत्॥ आग्नेय्यांपंचवक्त्रंतुनैर्ऋत्यांजगदंबिकां॥ वायव्यांद्युमणिंचैव

यजेन्मंत्रीत्थ्यतंद्वितइतिगणपतिपंचायतनम् ॥ भवानीतुयदामध्येईशान्यांमाधवंयजेत् ॥ आग्नेय्यांपार्वतीनाथं नैर्ऋत्यांगणनायकम् ॥ मध्योतनंतुवायव्यामाचार्यस्तुप्रपूजयेदितिलक्ष्मीपंचायतनम् ॥ शंकरंतुयदामध्येईशान्यांश्रीपतिंयजेत् ॥ आग्नेय्यांचतथाहंसंनैर्ऋत्यांपार्वतीसुतम् ॥ वायव्यांचसदापूज्याभवानीभक्तवत्सलेतिशिवपंचायतनम् ॥ यदातुमध्येगोविंदमैशान्यांशंकरंयजेत् ॥ आग्नेय्यांगणनाथंचनैर्ऋत्यांतपनंतथा ॥ वायव्यामंबिकांचैवयजेन्मंत्रीसमाहितइतिविष्णुपंचायतनम् ॥ स्वस्थानवर्जितादेवाःशोकदुःखभयप्रदाः ॥ तन्मंडलस्थितोराजासाधकश्चविनश्यति ॥ बोपदेवश्च ॥ शंभौमध्यगतेहरीनहरभूदेव्योहरौशंकरे भास्येनागसुतारवौहरगणेशाजांबिकास्थापिताः ॥ देव्यांविष्णुशिवैकदंतरवयोलंबोदरेजेश्वरेनार्याःशंकरभागतोतिसुखदाव्यस्तास्तुतेहानिदाः ॥ आस्यायमर्थः ॥ शंभौमध्यगतेसतिशंकरभागतईशानकोणमारभ्य आग्ने यादिकोणेषुहरीनहरभूदेव्यःस्थाप्याःतथाचईशानेविष्णुःआग्नेय्यामिनःसूर्यःनैर्ऋतेहरभूर्गणेशःवायव्यांदेवीति ॥ हरौमध्यगतेसतिईशानादिकोणेषुशंकरेभास्येनागसुताः ॥ ईशान्यांशंकरः आग्नेय्यांइभास्योगणपतिःनैर्ऋत्यांसूर्यःवायव्यांनगसुतादेवीरवौमध्यगतेसतिईशानादिषुहरगणेशाजांबिकाःईशान्यांहरःआग्नेय्यांगणेशःनैर्ऋत्यांविष्णुःवायव्यामंबिकाःवादेव्यांमध्यगतायांसत्यांईशा॰विष्णुशिवैकदंतरवयः ईशा॰विष्णुः आ॰शिवः नैर्ऋत्यांगणेशः वा॰सूर्यः ॥ लंबोदरेमध्यगतेसतिईशानादिषु अजेश्वरेनार्याःई॰विष्णुः आ॰शिवः नै॰सूर्यः वा॰देवीतिक्रममाह ॥ अत्रईशानादिकल्पना ॥ यत्रै

वश्यानुरक्तवियत्सुदेतिप्राचीतुतांवेदविदोवदंतिइतिगौतमोक्तप्राचीमनुसंधायद्रष्टव्या॥ यत्तुपूज्यपूजकयोर्मध्ये
प्राचीप्रोक्ताविचक्षणैः॥ प्राच्येवप्राचीसोदिष्टामुक्तवैदेवपूजनमितिविष्णुयामलवाक्यंतत्तांत्रिकपूजाविषयं
॥उक्तंच श्रीमातामहचरणैराचारमयूखे पूज्यपूजकांतःप्राचीआगमोक्तपूजायामेवतत्परिभाषायासुक्तत्वा
दिति॥ पंचायतनपूजाक्रमोपितत्रैवोक्तः॥ मुख्येपुष्पांजलिंदत्वागणेशाद्यर्चनंभवेत् गणेशएवमुख्यश्चेत्तत्र
सूर्यक्रमाद्भवेदितिवचनात्प्रधानदेवतायांपुष्पांजल्यंतंपूजाकांडंसमाप्यपदार्थानुसमयेनगणेशादीनर्चये
दिति॥शारदातिलकटीकायांतुपुष्पांजलिंमुख्ये आदौदत्वार्चनंकार्यमित्युक्तं वस्तुतस्त्वयमपिपूजाक्रमस्तां
त्रिकपूजायामेवज्ञेयः तत्रैवोक्तत्वात्॥ वैदिकपूजायांतुस्थापनक्रमएव॥ अतएववाजपेययाजिभिर्विष्णुशि
वगणेशसूर्यदुर्गाभ्योनमइतिश्लिष्टमंत्रउक्तोविष्णुपंचायतने॥ सूर्यपंचायतनपूजनेतुक्रमउक्तः॥ पद्मपुराणे॥
आदित्यंगणनाथंचदेवींरुद्रंयथाक्रमम्॥ नारायणंविशुद्धाख्यमंतेचकुलदेवताः॥ तथातत्रैव॥ रविर्विनायकश्चं
डीईशोविष्णुस्तुपंचमः॥ अनुक्रमेणपूज्यंतेव्युत्क्रमेणमहद्भयमिति॥ सूर्यातिरिक्तपंचायतनादिपूजायामप्या
दौसूर्यपूजांविधाय॥ विष्ण्वादिदेवानांपूजाकार्या॥ तदुक्तंब्राह्मे॥ अपूज्यप्रथमंसूर्यमपरान्यःप्रपूजयेत्॥ न
तद्भूतकृतंपापंसंप्रतीच्छंतिदेवताइति॥ इदंचपूजनंभूतशुद्धिंप्राणप्रतिष्ठांमातृकान्यासंचविधायकार्यमि
तिप्रयोगपारिजातोदयः॥ शौनकोपि॥ कृत्वातुभूतशुद्धिंचमातृकान्यासमाचरेदिति पूजाप्रकरणेउक्तंत-

थाच श्रुतिः ॥ देवो भूत्वा देवान्यजेदिति ॥ रामतापिन्यां च देवो भूत्वा यजेद्देवं नादेवो देवमर्चयेत् ॥ मंत्रमहोदधा
वपि ॥ देवार्चायोग्यताप्राप्त्यै भूतशुद्धिं समाचरेत् ॥ भूतशुद्धिं विधायैवं प्राणस्थापनमाचरेत् ॥ एवं प्राणान्
प्रतिष्ठाप्य मातृकान्यासमाचरेत् ॥ एवं मूलवाक्यानुसारेणेत्यर्थः ॥ मूलवाक्यानि तु ग्रंथविस्तृतिभयान्नोक्ता
नि ॥ तानि मस्कृतिमंत्रमार्तंडेद्रष्टव्यानीति दिक् ॥ अथ पुरुषसूक्तविधाने ॥ अर्चनं संप्रवक्ष्यामि विष्णोरमित
तेजसः ॥ यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुयुः ॥ आनुष्टुभस्य सूक्तस्य त्रिष्टुबंतस्य देवताः ॥ पुरुषो यो जगद्बी
जं ऋषिर्नारायणः स्मृतः ॥ प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ॥ तृतीयां वामपादे च चतुर्थीं दक्षिणे न्यसेत्
॥ पंचमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत् ॥ सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा ॥ नवमीं नाभिमध्ये तु
दशमीं हृदये तथा ॥ एकादशीं कंठमध्ये द्वादशीं वामबाहुके ॥ त्रयोदशीं दक्षिणे तु तथैवास्ये चतुर्दशीं ॥ अ
क्ष्णोः पंचदशीं चैव विन्यसेन्मूर्ध्नि षोडशीं ॥ एवं न्यासविधिं कृत्वा पंचांगानि समाचरेत् ॥ ब्राह्मणोस्येत्यादिभि
श्चर्ग्भिः पंचांगकल्पना ॥ हृदयं च शिरः शिखा कवचं चास्यमेव च ॥ यथा देहे तथा देवे न्यासं कृत्वा यथावि
धि ॥ एवं न्यासविधिं कृत्वा पश्चात्पूजां समारभेत् ॥ न्यासेन तु भवेत्सोऽपि स्वयमेव जनार्दनः ॥ आद्ययावाहयेद्दे
वमृचा तु पुरुषोत्तमम् ॥ द्वितीयया सनं दद्यात्पाद्यं चैव तृतीयया ॥ अर्घ्यं चतुर्थ्या दातव्यं पंचम्याचमनीयकम् ॥
षष्ठ्या स्नानं प्रदेयं तु सप्तम्या वस्त्रमेव च ॥ यज्ञोपवीतमष्टम्या नवम्या चंदनं स्मृतं ॥ पुष्पं दशम्या दातव्यमेका

दश्यांतुधूपकं॥ द्वादश्यादीपकंदद्यात्त्रयोदश्यानिवेदनं॥ चतुर्दश्यानमस्कारंपंचदश्याप्रदक्षिणां ॥उद्वास-
नंतुषोडश्याउपचारास्तुषोडश॥ स्नानेवस्त्रेचनैवेद्येदद्यादाचमनीयकम्॥ हुत्वाषोडशभिर्मंत्रैर्दद्यात्पुष्पाणि
षोडश॥ तच्चसर्वंजपेद्भूयःपौरुषंसूक्तमेवच॥ षण्मासात्सिद्धिमाप्नोतित्येवमेवंसमर्चनात्॥ अत्रयद्यप्यावा
हनंविसर्जनंचोक्तंतत्प्रत्यहंप्राणप्रतिष्ठापूर्वकप्रतिमादिपूजनविषयम्॥ अन्यत्रत्वादावंतेचपुष्पांजलिंसम
र्पयेत्॥ आदावंतेचमंत्राभ्यांपुष्पांजलिसमर्पणमितिनारदीयवाक्यात्॥ वस्त्रंप्रत्यहंननवीनंकिंतुसमर्पित
मेवाभ्युक्ष्यसमर्पयेत्॥ तदुक्तंतत्त्वसागरे॥ वस्त्रमभ्युक्षणाच्छुद्धंस्यदपरंतुदिनेदिने॥ आचारसमपूरवेमंत्रराज
विधौ॥ प्रतिमापट्टयंत्राणांनित्यस्नानंनकारयेत्॥ कारयेत्पर्वदिवसेयथामलनिवारणमितिकूर्मपुराणे॥ न
विष्णवाराधनात्पुण्यंविद्यतेकर्मवैदिकं॥ तस्मादनादिमध्यांतंनित्यमाराधयेद्धरिम्॥ तद्विष्णोरितिमंत्रेण
सूक्तेनपौरुषेणवा॥नैताभ्यांसदृशोमंत्रोवेदेषूक्तश्चपावनः॥ अथवादेवमीशानंभगवंतंसनातनं॥ आराध
येन्महादेवंभावपूतोमहेश्वरम्॥ मंत्रेणरुद्रगायत्र्याप्रणवेनाथवापुनः॥ ईशानेनाथवारुद्रैस्त्र्यंबकेनस
माहितः॥ तथोंनमःशिवायेतिमंत्रेणानेनवायजेदिति॥यजनप्रकारंबौधायनोप्याह॥ अथातोहरहःपरिचर्या
विधिंव्याख्यास्यामः स्नात्वाशुचौदेशेगोमयेनोपलिप्यप्रतिकृतिंकृत्वाक्षतपुष्पैर्यथालाभंसमर्चयेत्॥सह ॥२६॥
पुष्पोदकेनमहादेवमावाहयेत्॥ ॐ भूःमहादेवमावाहयामि॥ ॐ भुवःमहादेवमावाहयामि॥ ॐ स्वः महा०

ॐ भूर्भुवः स्वर्महादेवमावाहयामि इत्यावाह्यायातु भगवान्महादेव इत्यथस्वागतेनाभिवंदति स्वागतमनुना स्वागतं भगवते महापुरुषायेत त्स्वासनं कूर्चं समास्तां भगवन्महादेव इत्यत्र कूर्चं ददाति भगवते यं कूर्चो दर्भमयस्त्रि वृद्धरितः स्रुवर्णस्तं जुषस्वेति ॥ अत्र स्थानानि कल्पयति ॥ अग्रतो ब्रह्मणे कल्पयामि दक्षिणतः स्कंदाय कल्पयामि विनायकाय कल्पयामि पश्चिमतः स्थूलाय कल्पयामि उत्तरतः उमायै कल्पयामि नंदिकेश्वराय कल्पयामीति कल्पयित्वा सावित्र्या पात्रमभिमंत्र्य प्रक्षाल्य तिरः पवित्रमध्य आनीय सह पवित्रेणादित्यं दर्शयेत् ॥ ॐ मित्यृतमिति स्नानं ॥ ॐ स्वरिति रुद्रेण पाद्यास्रणवेनार्घ्यमथ व्याहृतिभिर्निर्माल्यमपोह्योत्तरतश्चंडायनम इत्यथैनं स्नापयित्वापो हि ष्ठा मयो भुव इति तिसृभिर्हिरण्यवर्णाः शुचयः पावका इति च तसृभिः पवमानः सुवर्चन इत्येतेनानुवाकेन स्नापयित्वाद्भिस्तर्पयति भवं देवं तर्पयामि शर्वं देवं त० ईशानं देवं त० पशुपतिं देवं त० रुद्रं देवं त० उग्रं देवं त० भीमं देवं त० महांतं देवं तर्पयामीति तर्पयित्वाथैतानि वस्त्रयज्ञोपवीतान्याचमनीयान्युदकेन व्याहृतिभिर्दत्त्वा व्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य ॥ नमस्ते रुद्र मन्यव इति गंधं दद्यात्सहस्राणि सहस्रश इति पुष्पं दद्यादीशानं त्वा भुवनानामधिश्रियमिति चाक्षतान्दद्यात्सावित्र्या धूपमुद्दीप्यस्वेति दीपं देवस्य त्वा सवितुः प्रसवे श्विनोर्बाहुभ्यां भगवते महादेवाय जुष्टं चरुं निवेदयामीति नैवेद्यमथाष्टभिर्नामधेयैरष्टौ पुष्पाणि दद्यात् भवाय देवाय नमः शर्वाय देवाय नमः ॥ ईशानाय देवाय नमः ॥ पशुपतये

देवाय० ॥ रुद्रायदेवाय० ॥ उग्रायदेवाय० ॥ भीमायदे० ॥ महतेदेवा० ॥ नमोब्रह्मणेनमः ॥ स्कंदायनमः ॥ प्र-
यातु भगवानीशः सर्वलोकनमस्कृतः ॥ अनेनहविषातृप्तः पुनरागमनायच ॥ पुनः संदर्शनायचेतिप्रतिमास्था
नेषुस्वप्नावाहनविसर्जनवर्ज्यंसमानमन्यत्स्वस्त्ययनमित्याचक्षतेभगवान्बौधायनइति ॥ अथपूजोपयुक्ता
निपुष्पाणि ॥ तत्रादौसूर्यपूजायांविहितानि ॥ भविष्यपुराणे ॥ मालिनीमल्लिकाचैवदूर्वाचाशोककर्णिका ॥ पा
टलाकरवीराणिजपाजयंतिरेवच ॥ चंपकोबकुलंचैवतथैवागस्तिकिंशुकौ ॥ भास्करस्यप्रपूजार्थंप्रात्याण्ये-
तानिनित्यशः ॥ नीलोत्पलसहस्रेणनीलोत्पलशतेनच ॥ रक्तैश्चकरवीरैश्चयस्तुपूजयतेरविम् ॥ वसेदर्कपुरे
श्रीमान्सूर्यतुल्यपराक्रमइति ॥ अथविहितपत्राणि बिल्वपत्रंशमीपत्रंभृंगराज स्यपत्रकं ॥ तमालपत्रंचहरेः
सद्यः स्तुष्टिकरंरवेः ॥ तुलसीकालतुलसीतथारक्तंचचंदनं ॥ केतकीपत्र कुसुमंसदैवतपनप्रियमिति ॥ अन्या-
न्यपिगणेशादिपूजायांविहितनिषिद्धानिग्रंथविस्तरभियेहनोक्तानितान्याचारमयूखादिग्रंथेभ्योवगंतव्या
नि ॥ तत्रापूर्वाभावेपर्युषितान्यपिग्राह्याणीत्युक्तंस्मृत्यंतरे ॥ पंकजंपंचरात्रंस्याद्दशरात्रंचबिल्वकं ॥ तुल
स्यैकादशाहात्तुपुनःप्रक्षाल्यपूजयेत् ॥ स्कांदे ॥ गंगाजलंव्यहाद्ग्राह्यंपूजनेभक्तिसंयुतः ॥ भविष्ये ॥ नाक्षतै
रर्चयेद्विष्णुंनतुलस्यागणेश्वरम् ॥ दूर्वाभिर्नार्चयेद्दुर्गांकेतकैर्नमहेश्वरम् ॥ अक्षतानिषेधस्तुशालग्रामपरः
शालग्रामशिलामेवनाक्षतैरर्चयेद्द्विजइतिविष्णूक्तेः ॥ उक्तंचवार्त्तिके ॥ सामान्यविधिरस्पष्टः संह्रियेतविशेषइ


॥२७॥

ति ॥ नांगुष्ठैर्मर्दयेद्देवंनाधःपुष्पैः समर्चयेत् ॥ कुशाग्रैर्नक्षिपेत्तोयंवज्रपातसमंभवेत् ॥ नशस्त्रैः पूजयेद्देवंकु
श्मैर्नमहीगतैः ॥ नविशीर्णदलैःशिष्टैर्नाशस्त्रैर्नाविकाशितैः ॥ पूतिगंधोग्रगंधीनिअल्पगंधीनिवर्जयेत्
वामने ॥ ह्रीरुका कंकणंदारुमल्लिकागुरुवासिता ॥ शंखंजातीफलंश्रीमस्त्रियाधूपाहरेरिमे ॥ ह्रीरुकामांसी
॥ कंकणंगुग्गुलुःशंखोनखं ॥ घृततैलैर्विनाकिंचिद्दिपार्थेनसमाहरेत् ॥ पाद्मे ॥ नैवेद्यपात्रंवक्ष्यामिकेश
वायमहात्मने ॥ हैरण्यंराजतंकांस्यंताम्रंमृन्मयमेवच ॥ पालाशपद्मपत्रंवापात्रंविष्णोरतिप्रियम् ॥
हविःशाल्योदनंदिव्यमाज्ययुक्तंसशर्करम् ॥ नैवेद्यंदेवदेवाययावकंपायसंतथा ॥ नैवेद्यवस्त्वलाभेतु
फलानिविनिवेदयेत् ॥ फलानामप्यलाभेतुतोयान्यपिनिवेदयेत् ॥ मरीचिः ॥ विधायदेवतापूजांप्रातर्हो
मादनंतरम् ॥ गुरूक्तेनतुमार्गेणमूलमंत्रंजपेद्बुधइति ॥ भविष्ये ॥ समभ्यर्च्यपिबेद्देवान्यःपादसलिलंहरेः ॥ स
यातिपरमंस्थानंतद्विष्णोःपरमंपदम् ॥ विष्णुपादाभिषिक्तंयःपात्रेणैवपिबेज्जलम् ॥ सर्वपापविनिर्मुक्तःस
यातिपरमांगतिं ॥ यत्पादसलिलंविष्णोःकरेणपिबतेयदि ॥ समूढोनरकंयातियावदिंद्राश्चतुर्दशेति ॥ पुल
स्त्यः ॥ शालग्रामशिलावारिसोमपानंदिनेदिने ॥ पात्रांतरेणनक्षाल्यंकरेणस्फुरयासममिति ॥ मोङ्करेणपा
नविधायकानिवचनानि ॥ प्रायःपांचरात्रादिपठितत्वेनतदनुयायिपराणि ॥ नतुवैदिकपराणि स्मृतिषुनिषेधा
त् ॥ अगस्त्यः ॥ शालग्रामशिलातोयमपीत्वायस्तुमस्तके ॥ प्रक्षेपणंप्रकुर्वीतब्रह्महासनिगद्यते ॥ यदासर्वं

दुरितक्षयकामः स्मृत्यंतरोक्तविप्रपादसलिलपानमिच्छतितदाक्रमः पाद्मे॥ विष्णुपादोदकात्पूर्वंविप्र
पादोदकंपिबेत्॥ विरुद्धमाचरेद्यस्तुब्रह्महासनिगद्यतइति॥ अथशिवलिंगनैवेद्यभक्ष्याभक्ष्यविचारः॥ पद्म
पुराणे॥ द्रव्यमन्नंफलंतोयंशिवस्वंनस्पृशेत्क्वचित्॥ लंघयेन्नैवनिर्माल्यंकूपेसर्वंविनिक्षिपेत्॥ मक्षिकापाद
मात्रंयःशिवस्वमुपजीवति॥ लोभान्मोहात्सपच्येतकल्पांतंनरकेनरइति॥ पाद्मस्कांदब्राह्मपुराणेसंग्रहेषु॥
शिवउवाच॥ अनर्हंममनैवेद्यंपत्रंपुष्पंफलंजलम्॥ शालग्रामशिलालग्नंसर्वंयातिपवित्रताम्॥ नैवेद्यंमन
राभुक्त्वाशुद्ध्यैचांद्रायणंचरेदिति॥ निर्माल्यकल्पनाचोक्तासिद्धांतशेखरे॥ धराहिरण्यगोरत्नताम्ररौप्यां
शुकादिकान्॥ विहायशेषंनिर्माल्यंचंडेशायनिवेदयेत्॥ अन्यदन्नादिपानीयंतांबूलंगंधपुष्पकम्॥ दद्या
च्चंडायनिर्माल्यंशिवभुक्तंतुसर्वशःइति॥ क्वचिच्छिवलिंगनैवेद्यभक्षणेदोषाभावउक्तः॥ शिवनारदसंवादे
॥ बाणलिंगेतुचंडांशेनचनिर्माल्यकल्पना॥ सर्वंबाणार्पितंग्राह्यंभक्ताभक्तैश्चनान्यथा॥ ग्राह्याग्राह्यवि
चारोयंबाणलिंगेनविद्यते॥ तदर्पितंजलंचान्नंग्राह्यंप्रसादसंज्ञया॥ बाणलिंगेस्वयंभूतेचंद्रकांतेहृदिस्थि
ते॥ चांद्रायणसमंज्ञेयंशंभोर्नैवेद्यभक्षणमिति॥ अथपूजाप्रयोगः॥ आचम्यदेशकालौस्मृत्वाममउ० य
थाशक्तियथाज्ञानंयथामीलितोपचारैःश्रीसूर्यादिपूजांकरिष्ये॥ तदंगत्वेनात्मशुद्ध्यर्थंभूतशुद्ध्यादिक
रिष्ये॥ इतिसंकल्प्य॥ पृथ्वीत्यस्यमेरुपृष्ठःकूर्मःसुतलंआसनेवि०॥ पृथ्वित्वया०॥ अपसर्पंतुवामदेवोभू ॥२८॥

तान्यनुष्टुप् ॥ भूतोत्सादनेविनियोगः ॥ ॐ अपस० ॥ मारभइति पादतलपार्श्वेनभूमिंत्रिःप्रहृत्य ॥ देवाआ-
यांतुयातुधानाअपयांतु ॥ विष्णोदेवयजनंरक्षस्व ॥ येभ्योमाते त्यस्यगयःप्लातो विश्वेदेवाजगती ॥ मनु
ष्यगंधनिवारणेविनियोगः ॥ एवापित्रइत्यस्यवामदेवोबृहस्पतिर्विश्वेदेवास्त्रिष्टुप् ॥ मनुष्यगंधनिवारणे-
वि० ॥ ॐ येभ्योमातामधुमत्पिन्वतेपयःपीयूषंद्यौरदितिरद्रिबर्हाः ॥ उक्थशुष्मान्वृषभरान्स्वप्नसस्तांआदित्यांअनु
मदास्वस्तये ॥ ॐ एवापित्रेविश्वदेवायवृष्णेयज्ञैर्विधेमनमसाहविर्भिः ॥ बृहस्पतेसुप्रजावीरवंतोवयंस्या
मपतयोरयीणां ॥ आगमार्थंतुदेवानांगमनार्थंतुरक्षसाम् ॥ कुरुघंटेवरं तत्रदेवानांस्थानसन्निधाविति
घंटांवादयित्वाभूतशुद्धिंकुर्यात् ॥ मूलाधारेकुंडलिनींध्यात्वाहमित्युत्थाप्यसुषुम्णामार्गेणहृदयस्थं
जीवंब्रह्मणिहंसइतिविलाप्य ॥ पादादिजान्वंतंपृथिवींलंबीजयुतांध्यात्वा ॥ जान्वादिनाभ्यंतंवंबीजयु
तंजलंध्यात्वा ॥ नाभ्यादिहृदयांतंरंबीजयुतमग्निंध्यात्वा ॥ हृदादिभ्रूमध्यांतंयंबीजयुतंवायुंध्यात्वा
॥ भ्रूमध्यादिब्रह्मरंध्रांतंहंबीजमाकाशंध्यात्वा ॥ भूतानिप्रत्येकंसंविलापयेत् ॥ पृथिवीमप्सुसंहरामि ॥
जलमग्नौसंहरामि ॥ अग्निंवायौसं० ॥ आकाशमहंकारेसं० ॥ अहंकारंमहत्तत्वेसं हरामि ॥ महत्तत्त्वंप्रकृ
तौसं० ॥ प्रकृतिंशुद्धब्रह्मणिसंहरामि ॥ आत्मानंब्रह्माहमस्मीतिध्यात्वादक्षिणकुक्षावधोमुखंपापपुरु
षंध्यात्वा यमितिबीजेनद्वात्रिंशद्वारमावर्तितेनवामनासयावायुमापूर्यरमितिबीजेनचतुःषष्टिवारमाव

र्तितेन कुंभकेन कृत्वा पापपुरुषदेहं निर्दह्येत् पुनर्यमिति बीजेन षोडशवारमावर्तिते नपापभस्मदक्षिणनासयारे
चयेत् ततो वमित्यमृतबीजेन देहोत्थं भस्मसंप्लाव्य लमिति बीजेन पीकृत्य रूपवर्णभावयित्वा हमिति बीजेनस
र्वांगान्युद्धृत्य कनकमयं शरीरं ध्यात्वा पुनरात्मनः सकाशादाकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरा
पः अद्भ्यः पृथिवी इति भूतान्युत्साद्य स्वस्थानगानि ध्यात्वा सोहमिति मंत्रेण कुंडलिनीसहितं जीवं हृदयानीय-
सुधामयं जीवं हृदि निधाय कुंडलिनीं मूलाधारे गतां ध्यायेदिति भूतशुद्धिः ॥ अथ प्राणप्रतिष्ठा ॥ अस्य श्री
प्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्रा ऋषयः ऋग्यजुःसामानि छंदांसि प्राणशक्तिर्देवता आंबीजं ह्रींशक्तिः
क्रौंकीलकं प्राणस्थापने विनियोगः ब्रह्मविष्णुरुद्रेभ्यो नमः शिरसि ॥ ऋग्यजुःसामभ्यो नमः मुखे ॥ प्राण
शक्तये नमः हृदये ॥ आं नमः गुह्ये ॥ क्रौं ह्रीं नमः पादयोरिति ऋष्यादि ॥ आदौ करन्यासः ॥ ङं कं खं घं गं. आ
काशवायुवह्निजलपृथिव्यात्मने हृदयाय नमः ॥ ञं चं छं झं जं. शब्दस्पर्शरूपरसगंधात्मने शिरसे स्वाहा ॥
णं टं ठं ढं डं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने शिखायै वषट् ॥ नं तं थं धं दं वाक्पाणिपादपायूपस्थात्मने कव
चाय हुम् ॥ मं पं फं भं ब वक्तव्यादानगमनविसर्गानंदात्मने नेत्रत्रयाय वौषट् ॥ शं यं रं वं लं क्षं षं सं ळं हं मन
बुद्ध्यहंकारचित्तात्मने अस्त्राय फडिति छोटिकात्रयं कृत्वा ध्यायेत् ॥ रक्तांभोधिस्थपोतोल्लसदरुणसरोजा
धिरूढाकराब्जैः पाशांकोदंडमिक्षूद्भवगुणमथचाप्यंकुशं पंचबाणान् ॥ बिभ्राणासृक्कपालं त्रिनयनलसि

तापीनवक्षोरुहाढ्यादेवीबालार्कवर्णाभवतुसुखकरीप्राणशक्तिःपरानइतिध्यात्वा॥मनसासंपूज्यत्हृदय
करंनिधाय॥आंन्हींक्रोंयंरंलंवंशंषंसंहोंॐक्षंसंहंसः॥न्हींओंहंसःममप्राणइहप्राणाः॥आंन्हींक्रो
मित्याद्युच्चार्यममजीवइहस्थिताः॥आंन्हीं०॥ममसर्वेंद्रियाणि॥आंन्हीं०ममवाङ्मनश्चक्षुःश्रोत्रघ्रा
णजिव्हाप्राणाइहागत्यसुखंचिरंतिष्ठंतुस्वाहा ॥ॐक्षंसंहंसःन्हीं०ओं अष्टत्रिंशाधिकशताक्षरमनु
प्राणप्रतिष्ठामंत्रंत्रिवारंजपित्वाषोडशप्रणवान्जपित्वा केचित्तुप्रणवाद्योयमोमामित्यादिवदंदिति त
त्रमूलंचिंत्यम्॥ अथमातृकान्यासः॥ तत्रादौप्राणायामः॥ अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः
॥इतिषोडशस्वरान्सबिंदून्उच्चारयन्वामनासयावायुमापूर्यकादिमांतैर्बिंदुयुतैःकुंभकंकृत्वायादि-
क्षांतैः सबिंदुकैर्दक्षिणनासयारेचयेत् ततोस्य अंतर्मातृकामंत्रस्य ब्रह्माऋषिः सरस्वतीदेवता गा य
त्रीछंदः हलोबीजानि स्वराःशक्तयःशरीरशुद्ध्यर्थेन्यासेविनियोगः॥ब्रह्मणेनमःशिरसि॥ गायत्र्यैनमः
मुखे॥ सरस्वत्यैनमोहृदये॥ हल्भ्योनमोगुह्ये॥ स्वरेभ्योनमःपादयोः॥ अंकंखंगंघंङंआंअंगुष्ठाभ्यां-
नमः॥ इंचंछंजंझंञंईं तर्जनीभ्यां०॥उं टंठंडंढंणंऊं मध्यमाभ्यां०॥ एंतंथंदंधंनंऐं अनामिकाभ्यांनम उ
ॐ पंफंबंभंमं औंकनिष्ठिकाभ्यां०॥ अंयंरंलंवंशंषंसंहंळंक्षंअः करतलकरपृष्ठाभ्यां०॥ अंकंखं ग
घंङं आंहृदयायनमः॥ इंचंछंजंझंञंईंशिरसेस्वाहा॥ उंटंठंडंढंणंऊं शिखायैवषट् एंतंथंदंधंनंऐंकव

आ० चायहुं॥ ओं पंफंबंभंमंऔं नेत्रत्रयायवौषट् अंयंरंलंवंशंषंसंहंळंक्षंअः अस्त्रायफट्॥ ध्यानं॥ अत्रअं कं०
॥३०॥ तर्मातृकावश्यकंकार्यं अक्षस्रक्टंकसारंगविद्याहस्तांत्रिलोचनाम्॥ चंद्रमौलिंकुचानम्रांरक्ताङ्गस्थां
गिरंभजेइतिध्यात्वा मनसासंपूज्य मातृकामंत्रंत्रिजपित्वा देवंस्नानशिलायांनिधायतदग्रेचंदनेनषट्को
णमंडलत्रयमुदक्संस्थमालिख्याभ्यर्च्य शंखंप्रणवेनाद्भिःपूरयित्वादक्षिणेमंडलेसंस्थाप्याभ्यर्च्यप्रार्थ
येत्॥ त्वंपुरासागरोत्पन्नविष्णुनाविधृतःकरे॥ निर्मितःसर्वदेवैस्त्वपांचजन्यनमोस्तु ते॥ पृथिव्यांयानि
तीर्थानिस्थावराणिचराणिच॥ तानितीर्थानिशंखेस्मिन्विशंतुब्रह्मशासनादित्युक्त्वाशंखमुद्रांप्रदर्श्य मध्य
मंडलेमहार्घ्यंपात्र्याद्भिःपूरयित्वापूजयेत् उत्तरमंडलेताम्रकलशंसंस्थाप्य संपूज्य कलशस्येतिमंत्रैस्ती
र्थान्यावाह्यशंखोदकेनात्मसहितंपूजासंभारंप्रोक्ष्य पुरुषसूक्तेनन्यासंकुर्यात्॥ सहस्रशीर्षेतिनाराय
णःपुरुषोनुष्टुप् अंत्यात्रिष्टुप् स्वांगन्यासेविनियोगः॥ ॐ सहस्रशीर्षा० गुलं१ वामकरायनमः ॐ पुरुष
एवेदं० हृति२ दक्षिणकरे ॐ एतावानस्यमहि० दिवि३ वामपादे ॐ त्रिपादूर्ध्व० अभि४ दक्षिणपादे ॐ त
स्माद्विराळ० पुरः५ वामजानौ ॐ यत्पुरुषेणहविषा० त्स्वविः६ दक्षिणजानौ ॐ तंयज्ञंबर्हिषिप्रौ० श्चये७
वामकट्यां ॐ तस्माद्यज्ञात्स० श्चये८ दक्षिणकट्यां ॐ तस्माद्यज्ञात्सर्वहुतऋचः० यत९ ।नाभौ ॐ तस्माद ॥३०॥
श्वाअजायंतयेकेचो० वयः१० हृदये ॐ यत्पुरुषंव्य० न्येते११ कंठे ॐ ब्राह्मणोस्य० यत१२ वामभुजे ॐ चंद्रमा

मनसो० यत १३ दक्षिणभुजे ॐ नाभ्याआसी० यत् १४ सुरवे ॐ सप्तास्यासन्० पशू १५ भ्रुवोर्मध्ये ॐ यज्ञेनय
ज्ञ० देवाः १६ मूर्ध्नि ॥ अथपंचांगन्यासः ॥ ॐ ब्राह्मणोस्येतिहृदये ॐ चंद्रमामनस इतिशिरसि ॐ नाभ्याआ
सीदितिशिखायां ॐ सप्तास्यासन्नितिकवचायहुं ॐ यज्ञेनयज्ञेनेति अस्त्रायफट् एवमेवदेवांगन्यासंकृत्वा
षोडशोपचारैःपूजयेत् ॥ ॐ सहस्रशीर्षा० श्रीसूर्यगणेशमहालक्ष्मीशिवाविष्णुभ्योनमःपुष्पंसमर्पयामि
ॐ पुरुषए० आसनंस० ॐ एतावानस्य० पाद्यंसम० पाद्योत्तरंनाममंत्रेणैवाचमनीयं ॐ त्रिपादूर्ध्व० अर्घ्यंस
म० ॐ तस्माद्विराळ० आचमनीयं ॐ यत्पुरुषेण० स्नानंस० सतिसंभवेपंचामृतस्नानान्यत्रैवकारयित्वासू
क्तेनाभिषेकःकार्यइतिसंप्रदायः आचमनीयं० ॐ तंयज्ञं० वस्त्रंस० ॐ तस्माद्यज्ञा० यज्ञोपवीतं आचमनी
यं ॐ तस्माद्यज्ञा० गंधं० ॐ तस्मादश्वा० पुष्पं० ॐ यत्पुरुषं० धूपं० ॐ ब्राह्मणोस्य० दीपं० ॐ चंद्रमा० नैवे
द्यं० आचमनं० करोद्वर्तनादि ॐ नाभ्या० नमस्कारं ॐ सप्तास्यासन्० प्रदक्षिणां ॐ यज्ञेन० पुष्पांजलिं० त
तःशि ष्टमंत्रेणनीराजनंकृत्वा अग्निमाधायपुरुषसूक्तेनप्रत्यृचमाज्यंहुत्वा० पुनस्तेनैवसूक्तेनषोडश
पुष्पाण्यर्पयित्वासूक्तंजपेत् तदनंतरंस्वोपदिष्टमूलमंत्रंयथाशक्तिजपित्वा कर्मेश्वरार्पणंकृत्वा घंटांसंपू
ज्यदेवंप्रार्थयेत् तत्रमंत्राः॥ आवाहनंनजानामिनजानामि विसर्जनं॥ पूजांचैवनजानामिक्षम्यतांपरमेश्व
र॥ १॥ मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥ २॥ अन्यथाशरणंना

स्तित्वमेवशरणंमम॥ तस्मात्कारुण्यभावेनरक्षस्वपरमेश्वर॥ ३॥ भूमौस्खलितपादानांभूमिरेवावलंबनम्
॥ त्वयिजातापराधानांत्वमेवशरणंमम ॥ ४॥ इतिप्रार्थ्य॥ शंखमध्येस्थितंतोयंभ्रामितंकेशवोपरि॥ अंगलग्नं
मनुष्याणांब्रह्महत्यांव्यपोहतु॥ १॥ इतिदेवोपरिभ्रामयित्वाजलंशिरसिचाभ्युक्ष्य अकालमृत्युहरणंब्रह्मह
त्याविनाशनम्॥ रोगघ्नंपुण्यदंपास्येस्फुरत्पादावनेजनमितिमंत्रेणदेवतीर्थेपिबेज्जलमितिसंक्षेपः इति
श्रीभारद्वाजमहादेवभट्टात्मजदिवाकरकृते आचारार्के अष्टधाविभक्तस्यदिवसस्यप्रथमभागकृत्यं॥ स
नातनंचिन्मयमानवीजंसंसारवृक्षस्यगिरामगम्यम्॥ रामाभिधंज्योतिरहर्निशंतद्धृदब्जकोशेस्फुरतान्म
दीये॥ १॥ ॥अथद्वितीयभागकृत्यम्॥ ॥मदनरत्नेदक्षः॥ दिवसस्याद्यभागेतुसर्वमेतत्समाचरेत्॥
द्वितीयेचतथाभागेवेदाभ्यासोविधीयते॥ १॥ वेदाभ्यासोपिपंचधेत्युक्तमाचारमयूखेषट्त्रिंशन्मते वेद
स्वीकरणंपूर्वंविचारोभ्यसनंजपः॥ तद्दानंचैवशिष्येभ्योवेदाभ्यासोहिपंचधेति॥ कौर्मे॥ जपेदध्यापयेच्छि
ष्यान्धारयेद्वाविचारयेत्॥ अवेक्षेतचशास्त्राणिधर्मादीनिद्विजोत्तमइतिद्वितीयभागकृत्यम्॥ ॥अथतृ
तीयभागकृत्यमाह॥ दक्षः॥ तृतीयेचतथाभागेपोष्यवर्गार्थसाधनम्॥ पोष्यवर्गमप्याह॥ मातापितागु
रुर्भार्याप्रजाहीनःसमाश्रितः॥ अभ्यागतोतिथिश्चाग्निःपोष्यवर्गउदाहृतः॥ ज्ञातिर्बंधुजनोहीनस्तथाना
थःसमाश्रितः॥ इतितृतीयभागकृत्यम्॥ ॥अथचतुर्थभागकृत्यम्॥ दक्षस्मृतौ॥ चतुर्थेतुदिवाभागे

स्नानार्थंमृदमाहरेत्॥ तिलपुष्पकुशादींश्च स्नायाच्चाकृत्रिमेजले॥ गृह्यपरिशिष्टे॥ अथमध्यंदिनेतीर्थमे
त्यस्नायान्नास्मिन्ब्रह्मयज्ञतर्पणाद्वस्त्रंनिष्पीडयेदिति तच्च प्रतिपत्षष्ठ्येकादशीरविभौमभृगुवार भरणी
कृत्तिकामघानक्षत्रमन्वादियुगादिभिन्नतिथौकार्यं तत्रतन्निषेधात् निषेधवाक्यानितुमदनरत्नादिग्रंथे
षुद्रष्टव्यानि॥ अथमध्यान्हस्नानप्रयोगः॥ नदीतीरमेत्यप्रक्षालितमुखपादपाणिरान्तांतोद्धृशिरस्कःशु
चौदेशेशकृद्भृत्तिकांतंदुलयवतिलांश्चनिधायमलस्नानंविधायदेशकालौस्मृत्वा ममसमस्तपापक्षया
पुरभिर्द्धद्वाराश्रीपरमेश्वरप्रीत्यर्थंमध्यान्हस्नानंकरिष्ये इतिसंकल्प्य मृत्तिकांगायत्र्यादाय अश्वक्रां
तेरथक्रांतेविष्णुक्रांतेवसुंधरे॥ शिरसाधारयिष्यामिरक्षस्वमांपदेपदे॥ उद्धृतासिवराहेणकृष्णेनशतबा
हुना॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतमित्यभिमंत्र्यगायत्र्याप्रोक्ष्यगायत्रीशिरःसंज्ञकेन ॐ आपो
ज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरोमितिमंत्रेणावृत्त्यात्रेधाविभज्यैकेनभागेनमूर्धादिनाभिपर्यंतंद्वितीय
भागेननाभेरधःपादपर्यंतमनुलिप्यांगानिक्षालयित्वादित्यंनिरीक्ष्यद्विराचम्यतृतीयभागंप्रचोदयादि
त्यरूपेणादायसव्येपाणौकृत्वा ॐ भूरितिदक्षिणभागं ॐ भुवइतिमध्यमभागं ॐ स्वरित्युत्तरभागंवि
धायदक्षिणभागमस्त्रेणदशदिक्षुमंत्रावृत्त्यानिक्षिप्योत्तरभागंतीर्थेतूष्णींप्रक्षिप्यमध्यमभागंगाय
त्र्याभिमंत्र्य आदित्यायप्रदर्श्यगायत्र्याप्रणवेनचसर्वांगमनुलिप्य रुक्मित्यान आपओषधयःसंतु

इतिमंत्रेणाद्भिरात्मानंपरिषिच्यदुर्मित्र्यास्तस्मैसंतुयोस्मान्द्वेष्टियंचवयंद्विष्मइतिमंत्रेणांगानिप्रक्षाल्याचम्य प्रातःस्नानवद्वरुणावाहनादिवस्त्रनिष्पीडनवर्जं कुर्यात् अशक्तोप्यतरेवंस्नायात् अथात्रैवाशक्तस्यमंत्रस्नान विधिर्लिख्यते॥ श्राद्धहेमाद्रौयोगयाज्ञवल्क्यः॥ असामर्थ्याच्छरीरस्यकालशक्त्याद्यपेक्षया॥मंत्रस्नानादिनः सप्तकेचिदिच्छंतिसूरयः॥मांत्रंभौमंतथाग्नेयंवायव्यं दिव्यमेवच॥वारुणंमानसंचैवसप्तस्नानान्यनुक्रमात्॥ए तेषांलक्षणान्याह सएव आपोहिष्ठादिभिर्मांत्रंमृदालंभश्चपार्थिवम्॥आग्नेयंभस्मनास्नानंवायव्यंगोर जःस्मृतम्॥यत्तुसातपवर्षेणस्नानंतद्दिव्यमुच्यते॥वारुणंचावगाहंतुमानसंविष्णुचिंतनमिति॥ जाबालिः ॥अशिरस्कंभवेत्स्नानंस्नानाशक्तौतुकर्मिणाम् आर्द्रेणवाससावापिमार्जनंदैहिकंविदुः ज्वराभिभूता यानारीरजसाचपरिप्लुता कथंतस्याभवेच्छौचंशुद्धिःस्यात्केनकर्मणा चतुर्थेहनिसंप्राप्तेस्पृशेदन्या तुतांस्त्रियम् सासचैलावगाह्यापःस्नात्वास्नात्वापुनःस्पृशेत् दशद्वादशकृत्वोवाआचामेच्चपुनःपु नः अंतेचवाससांत्यागस्ततःशुद्धाभवेत्तुसेतिपरिशिष्टे अथाशक्तस्यमंत्रस्नानं शुचौदेशेशुचिराचां तःप्राणानायम्यदर्भपाणिःसव्येपाणावपःकृत्वातिसृभिरापोहिष्ठीयाभिःपच्छःप्रणवपूर्वंदर्भोदकेर्मार्जये त्पादयोर्मूर्ध्निहृदयेमूर्ध्निहृदयेपादयोर्मूर्ध्निचाथार्धर्चशोमूर्ध्निहृदयेपादयोर्हृदयेपादयोर्मूर्ध्निचाथर्कशोहृद येपादयोर्मूर्ध्नि चाथतृचेनमूर्ध्निइतिमार्जयित्वागायत्र्यादशधाभिमंत्रिताअपःप्रणवेनपीत्वाद्विराचामेदित्ये

तन्मंत्रस्नानं एवंमध्यान्हस्नानंविधायमध्यान्हसंध्याकार्या ततोब्रह्मयज्ञः तथाचपरशुरामनिबंधेः त्रिः
॥स्नानंमाध्यान्हिकंकृत्वासंध्याकर्मनिवर्त्यच ब्रह्मयज्ञंविधायाथगृहमेत्याचरेत्परानिति शंखः प्रातःसं
ध्यांसनक्षत्रांमध्यमांस्नानकर्मणि सादित्यांपश्चिमांसंध्यामुपासीतयथाविधीति स्नानकर्मणिकृतेसतीति
शेषः अत्रकेचिद्बह्वृचानामादौब्रह्मयज्ञः ततःसंध्याततसूत्रेग्रामान्निष्क्रम्यापआप्लुत्यशुचौदेशेयज्ञोप
वीत्यादिनाब्रह्मयज्ञस्यस्नानानंतर्योक्तेरित्याहुस्तच्चिंत्यं अपआप्लुत्येतिक्त्वाप्रत्ययस्योत्तरकालमात्रार्थ
त्वेप्यव्यवहितोत्तरकालार्थत्वाभावेनान्विवचनोक्तक्रमबाधेप्रमाणाभावात् तथाच संध्याहीनोशुचिर्नि
त्यमनर्हःसर्वकर्मसु यदन्यत्कुरुतेकर्मनतस्यफलभाग्भवेदिति दक्षवाक्याच्च संध्यैवादौयुक्ता एषएव
श्रीमातामहचरणानांवाजपेययाजिनांप्रयोगपारिजात कारादिपूर्वनिबंधकाराणांस्नानोत्तरंसंध्याप्रयो
गंवदतामाशयः मध्यान्हसंध्यायाः कालांतरमप्याहशातातपः अध्यर्धयामादासायंसंध्यामाध्या
न्हिकीस्मृतेति अथमध्यान्हसंध्यायांविशेषः भगवान् आपःपुनंतुमध्यान्हेमंत्राचमनमाचरेत् गृह्य
परिशिष्टे आकृष्णीययाहंसवत्यावात्रिःसकृद्वार्घ्यमुत्क्षिपेदिति अर्घ्यदानेविशेषःसंग्रहे मुक्तहस्तेन
दातव्यंमुद्रांतत्रनकारयेत् तर्जन्यंगुष्ठयोगेनराक्षसीमुद्रिकामता राक्षसीमुद्रिकार्घ्येणतत्तोयंरुधि
रंभवेत् जलेत्वर्घ्यंप्रदातव्यंजलाभावेशुचिस्थले संप्रोक्ष्यवारिणासम्यक्ततोर्घ्यंतुप्रदापयेदिति उप-

आ० स्थानेविशेषोगृह्यपरिशिष्टे उद्वाङ्कुरुदुत्यंजातवेदसंचित्रंदेवानामितिसूक्ताभ्यामादित्यमुपस्थायजपमासी कं०
॥३३॥ नोयथेष्टकालंकुर्यादित्येषसंध्याविधिर्व्याख्यातइति गायत्रीजपस्तूपविश्यैवकार्यः परिशिष्टात् तथामध्य
मसंध्यायामासीनः प्राङ्मुखोजपेदितिस्मृतिचंद्रिकायां पुराणोक्तेश्च संध्यालोपे प्रायश्चित्तंस्मृत्यंतरे यः
संध्यांयदिनोपास्तिअग्निकार्यंनचेत्कृतम् गायत्र्यष्टशतंजाप्यंप्रायश्चित्तंद्विजन्मनामिति अथप्रयोगः
आचम्यप्राणानायम्यममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंमध्यान्हसंध्यामुपासिष्ये इतिसंक-
ल्प्यापोहिष्ठेतित्र्चेनपूर्ववत्प्रथममार्जनंकृत्वा मंत्राचमनंकार्यं आपःपुनंत्वित्यस्यानुवाकस्यनारा
यणआपोअद्भिःमंत्राचमनेविनियोगः ॐ आपःपुनंतुपृथिवींपृथिवीपूतापुनातुमां पुनंतुब्रह्मणस्प-
तिर्ब्रह्मपूतापुनातुमाम् यदुच्छिष्टमभोज्यंच यद्वादुश्चरितंमम सर्वंपुनंतुमामापोसतांचप्रतिग्रहंस्वा
हा इतिमंत्रेणापःपीत्वाचम्य प्रातःसंध्यावत्द्वितीयतृतीयचतुर्थमार्जनाघमर्षणांतंकृत्वाचम्यार्घ्यंदद्या
त् हंसःशुचिषदितिमंत्रस्य गौतमोवामदेवःसूर्योजगती अर्घ्यदानेविनि० ॐ हंसःशुचिषद्वसुरंतरि-
क्षसद्धोतावेदिषदतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंश्रीसूर्यायेद
मर्घ्यंदत्तंनमम एवंत्रिःसकृद्वार्घ्यंदत्वात्मानंपरिषिच्य द्विराचम्योर्ध्वबाहुरुन्मुखःसूर्यमुपतिष्ठेत् उदुत्य ॥३३॥
मितित्रयोदशर्चस्यसूक्तस्य काण्वःप्रस्कण्वऋषिः श्रीसूर्योदेवता नवाद्यागायत्र्यः अंत्याश्चतस्रोनुष्टुभः

चित्रंदेवानामितिषड्टचस्यसूक्तस्य आंगिरसः कुत्सः सूर्यस्त्रिष्टुप्सूर्योपस्थानेविनि० ॐ उदुत्यंजातवेदसंदे
वंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ अपत्येतायवोयथानक्षत्रायंत्यक्तुभिः ॥ सूरायविश्वचक्षसे ॥ अदृश्र
मस्यकेतवोविरश्मयोजनाँअनु ॥ भ्राजंतोअग्नयोयथा ॥ तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य ॥ विश्वमा
भासिरोचनं ॥ प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान् ॥ प्रत्यङ्विश्वंस्वर्दृशे ॥ १ ॥ येनापावकचक्षसाभुरण्यं
तंजनाँअनु ॥ त्वंवरुणपश्यसि ॥ विद्यामेषिरजस्पृथ्वहामिमानोअक्तुभिः ॥ पश्यञ्जन्मानिसूर्य ॥ सप्तत्वाह
रितोरथेवहंतिदेवसूर्य ॥ शोचिष्केशंविचक्षण ॥ अयुक्तसप्तशुंध्युवः सूरोरथस्यनप्त्यः ॥ ताभिर्यातिस्वयुक्ति
भिः ॥ उद्वयंतमसस्परिज्योतिष्पश्यंतउत्तरं ॥ देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमम् ॥ उद्यन्नद्यमित्रमहआरो
हन्नुत्तरांदिवं ॥ हृद्रोगंममसूर्यहरिमाणंचनाशय ॥ शुकेषुमेहरिमाणंरोपणाकासुदध्मसि ॥ अथोहारिद्रवे
षुमेहरिमाणंनिदध्मसि ॥ उदगादयमादित्योविश्वेनसहसासह ॥ द्विषंतंमह्यंरंधयन्मोअहंद्विषतेरधं ॥ २ ॥
ॐ चित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षंसूर्यआत्माजगतस्त
स्थुषश्च ॥ सूर्योदेवीमुषसंरोचमानांमर्योनयोषामभ्येतिपश्चात् ॥ यत्रानरोदेवयंतोयुगानिवितन्वतेप्रति
भद्रायभद्रं ॥ भद्राअश्वाहरितःसूर्यस्यचित्राएतग्वाअनुमाद्यासः ॥ नमस्यंतोदिवआपृष्ठमस्थुःपरिद्यावा
पृथिवीयंतिसद्यः ॥ तत्सूर्यस्यदेवत्वंतन्महित्वंमध्याकर्तोर्विततंसंजभार ॥ यदेदयुक्तहरितःसधस्थादाद्रा

त्रीवासरत्तनुतेसिमस्मै॥ तन्मित्रस्यवरुणस्याभिचक्षेसूर्योरूपंकृणुतेद्योरुपस्थे॥ अनंतमन्यद्रुशदस्यपा
जः कृष्णमन्यद्धरितः संभरंति॥ अद्यादेवाउदितासूर्यस्यनिरंहसः पिपृतानिरवद्यात् तन्नोमित्रोवरुणोमा
महंतामदितिः सिंधुः पृथिवीउतद्यौः॥ ३॥ इत्युपस्थायोपविश्याचम्यप्राणानायम्यभूतशुद्ध्यादिकृत्वा यु
वतींशुक्लांवादित्यमंडलमध्यस्थांश्वेतवर्णांश्वेतांबरानुलेपनस्रगाभरणांचतुर्वक्त्रांप्रतिवक्त्रंत्रिनेत्रांचंद्रशेख
रां त्रिशूलखड्गखट्वांगडमरुकचतुर्भुजाम् वृषभासनारूढांरुद्रदैवत्यां यजुर्वेदमुदाहरंतीं भुवर्लोकाधिष्ठात्रींसा
वित्रींनामदेवतांध्यात्वासंपूज्ययथेष्टकामजपंकुर्यात् अथपंचमहायज्ञाः तथाचाश्वलायनसूत्रम् अ
थातः पंचयज्ञादेवयज्ञोभूतयज्ञः पितृयज्ञोब्रह्मयज्ञोमनुष्ययज्ञइतितद्यदग्नौजुहोति सदेवयज्ञोयद्बलिं
करोतिसभूतयज्ञोयत्पितृभ्योददातिसपितृयज्ञोयत्स्वाध्यायमधीतेसब्रह्मयज्ञोयन्मनुष्येभ्योददातिसम
नुष्ययज्ञइतितानेतान्यज्ञानहरहः कुर्वीतेति॥ यद्यपिपाठक्रमाद्वैश्वदेवानंतर्यंब्रह्मयज्ञस्यप्राप्तंतथाप्यादौ
ब्रह्मयज्ञएवकार्यः स्वगृह्यविधिनाकृत्वाब्रह्मयज्ञंपुराद्विजः॥ स्वाध्यायतर्पणाभ्यांचग्रु ह्मेत्यान्वरेत्परानि
ति आश्वलायनस्मृतेः॥ वृत्तौतु॥ वैश्वदेवस्यपुरस्तादुपरिष्टाद्वाब्रह्मयज्ञः कार्योनक्रमनियमइत्युक्तं श्रीमा
तामहचरणास्तु॥ सचार्वाक्तर्पणात्कार्यः पश्चाद्वाप्रातराहुतेः॥ वैश्वदेवावसानेवानान्यत्रर्नेनिमित्ततइति
गृह्यस्मृतिवाक्यमाश्वलायनान्यत्रपरं आश्वलायनानांतर्पणस्योत्तरांगत्वेनैवतत्सूत्रात्प्राप्तेरर्वाक्तर्पणादि

त्यस्यतदितरान्प्रत्येवसार्थक्यात् तत्साहचर्यात्पश्चाद्धेतिवैश्वदेवावसानेत्येतदपितान्प्रत्येवेत्याश्वलायनेरुक्ता
दावेवब्रह्मयज्ञः कार्यइत्याहुः शिष्टाचारोप्येवमेव अथस्वाध्यायविधिः प्राग्वोदग्वाग्रामान्निष्क्रम्यापआप्लु
त्य शुचौदेशेयज्ञोपवीत्याचम्याक्लिन्नवासादर्भाणांमहदुपस्तीर्य प्राक्कूलानांतेषुप्राङ्मुखउपविश्योपस्थं
कृत्वादक्षिणोत्तरौपाणीसंधायपवित्रवंतौ विज्ञायतेपांवाएषओषधीनांरसोयद्दर्भाःसरसमेवतद्ब्रह्मकरो
तिद्यावापृथिव्योःसंधिमीक्षमाणःसंमील्यवायथावायुक्तमात्मानंमन्येत तथायुक्तोधीयीतस्वाध्यायमों
पूर्वाव्याहृतयःसावित्रीमन्वाहपच्छोर्धर्चशःसर्वामितितृतीयम् ॥१॥ अथस्वाध्यायमधीयीतऋचोयजूं
षिसामान्यथर्वांगिरसोब्राह्मणानिकल्पान्गाथानाराशंसीरितिहासपुराणानीतियदृचोधीतेपय आहुति
भिरेवतद्देवतातर्पयतियद्यजूंषिघृताहुतिभिर्यत्सामानिमध्वाहुतिभिर्यदथर्वांगिरसःसोमाहुतिभिर्यद्ब्रा
ह्मणानिकल्पान्गाथानाराशंसीरितिहासपुराणानीत्यमृताहुतिभिर्यदृचोधीतेपयसः कुल्या अस्यपितॄ
न्स्वधाउपक्षरंतियद्यजूंषिघृतस्यकुल्यायत्सामानिमध्वःकुल्यायदथर्वांगिरसःसोमस्यकुल्याय ब्राह्म
णानिकल्पान्गाथानाराशंसीरितिहासपुराणानीत्यमृतस्यकुल्याः सयावन्मन्येततावदधीत्येतयापरिद
धातिनमोब्रह्मणेनमोअस्त्वग्नयेनमःपृथिव्यैनमओषधीभ्यः॥ नमोवाचेनमोवाचस्पतयेनमोविष्णवेम
हतेकरोमीति॥ ब्रह्मयज्ञप्रयोगेऽथातोधर्मंव्याख्यास्यामइत्यादिवाक्यानिशिष्टाःपठंतितत्रमूलंनजा

आ० ने॥ देवतास्तर्पयति प्रजापतिर्ब्रह्मावेदादेवाऋषयः सर्वाणिछंदांस्योंकारोवषट्कारोव्याहृतयः सावित्री कं०
॥३५॥ यज्ञाद्यावापृथिवी अंतरिक्षमहोरात्राणिसांख्याः सिद्धाः समुद्रानद्योगिरयः क्षेत्रौषधिवनस्पतिगंधर्वाप्
सरसोनागावयांसिगावः साध्याविप्रायक्षारक्षांसिभूतान्येवमंतान्यथऋषयः शतर्चिनोमाध्यमागृत्स
दोविश्वामित्रोवामदेवोऽत्रिर्भरद्वाजोवसिष्ठः प्रगाथाः पवमान्यः क्षुद्रसूक्तामहासूक्ताः [illegible] प्राचीनावीती
ऋमंतुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्याजानंतिबाहविगार्ग्यगौतमशाकल्य
बाभ्रव्यमांडव्यमांडूकेयागार्गीवाचक्नवी [illegible] वडवाप्रातीथेयीसुलभामैत्रेयीकहोळंकौषीतकंमहाकौषी
तकं पैंग्यंमहापैंग्यंसुयज्ञंसांख्यायनमैतरेयंमहैतरेयंशाकलंबाष्कलंसुजातवक्रमौदवाहिंमहौदवाहिं
सौजामिंशौनकमाश्वलायनंयेचान्येआचार्यास्तेसर्वेतृप्यंत्विति प्रतिपुरुषंपितृंस्तर्पयित्वागृहानेत्ययद्द
दातिसादक्षिणासापिविज्ञायतेसयदितिष्ठन्व्रजन्नासीनः शयानोवायंयंक्रतुमधीतेतेन तेनहास्यक्रतु
नेष्टंभवतीतिविज्ञायतेतस्यहवाएतस्यानध्यायोयदात्माशुचिर्यद्देशः॥३॥ अथवृत्तिकारः॥ ऋमंत्वित्यादीनि
त्रयोविंशतिवाक्यानितत्रकहोळादिषुतर्पयामीतिशब्दः कार्यः सर्वत्रप्रतिवाक्यंतर्पणंकुर्यात प्रति
पुरुषंपितृंस्तर्पयित्वा प्रतिपुरुषंवचनंपृथक्पृथक्तर्पयेत् नपितृंस्तर्पयामीतिसकृत्तर्पयेदित्येवमर्थ ॥३५॥
मित्याह प्रतिपुरुषमित्याश्वलायनोक्तमेवतर्पणक्रममाहहारीतः॥ पितृभ्यस्तर्पणंकुर्यात्ततोमातृभ्यए

वत्र ॥ ततोमातामहानांचक्रमएषचतर्पणे अत्रबहुवचनस्वरसात्पार्वणविधानमेवनत्वेकोद्दिष्टविधानम् स
पत्नमातुरत्तकेवलायाअपिभवति कुर्यान्मातरिजीवत्यांपितामह्यानन्ततर्पणं पितृपत्न्यःप्रमीतास्तुस्तर्प
येत्केवलाश्चताइतिशाकलर्षिवचनात् ॥ हेमाद्रौसंग्रहे ॥ तातांबात्रितयंसपत्नजननीमातामहादित्रयंसस्त्रि
स्त्रीतनयादितातजननीस्वभ्रातरःसस्त्रियः ॥ तातांबात्मभगिन्यपत्यधवयुग्जायापितासद्गुरुःशिष्या
प्ताःपितरोमहालयविधौतीर्थेतथातर्पणे ॥ अस्यार्थः जनकादित्रयंजनन्यादित्रितयंसपत्नमातामाता
महादित्रयंसस्त्रि सपत्नीकंतातजननीस्वभ्रातरःपितृव्यमातुलसोदराःसपत्नीकाः तातांबात्मभगिनी
पितृमातृस्वभगिनीसापत्यासधवाचजायापिताश्वशुरःशेषंसुगमम् अत्रान्यवर्णानांशिष्यासखा
दिनामसक्तजलदानंनिषेधति योगयाज्ञवल्क्यः सवर्णेभ्योजलंदेयंनान्यवर्णेभ्यएवचेति तर्पणप्र
कारमाह वसिष्ठः संबंधमनुकीर्त्यैवनामगोत्रमनंतरं वस्वादिरूपंसंकीर्त्यस्वधाकारेणतर्पयेत् स्वधा
शब्दोत्तरंनमः शब्दोपिवाच्यः संबंधनामगोत्रेणस्वधांतेचनमोनमः वस्वादिरूपंसंकीर्त्यतर्पयेत्पितॄ
पूर्वकमितिस्मृतिसंग्रहात् नामग्रहणेविशेषमाह बौधायनः शर्मांतंब्राह्मणस्योक्तंवर्मांतंक्षत्रिय
स्यतु गुप्तांतंचैववैश्यस्यदासांतंशूद्रजन्मनः चतुर्णामपिवर्णानांगोत्रत्वेपितृगोत्रता पितृगोत्रंकु
मारीणामूढानांभर्तृगोत्रतेति स्त्रीणांदांतंनामज्ञेयम् स्त्रीणांदांतंनामनिर्देशोदितिगोभिलसूत्रात्

आ० अत्रैकहस्तेनतोयेनयः कुर्यात्पितृतर्पणम् पितरोनप्रशंसंतिदेवताइतिस्मृतिवचनादेकहस्तेनतर्पणस्यग कं०
॥३६॥ र्हितत्वात्सव्यान्वारंभमाह वृद्धयाज्ञवल्क्यः अन्वारब्धेनसव्येनपाणिनादक्षिणेनतु सव्योत्तराभ्यांपा
णिभ्यामथवातर्पणंभवेदिति अत्रपूर्वार्धेवह्वृचान्प्रत्युत्तरार्धमन्यान्प्रतिबोध्यंएकांगवचनेदक्षिणंप्रती
यादनादेशइत्याश्वलायनसूत्रात्तेषांकेवलदक्षिणांगप्रसक्तौअन्वारंभेतिकर्तव्यतायाः सूत्रानुक्तायाः
अर्थविरोधेनस्मृतितोग्रहणेबाधकाभावात् स्मृतिप्राप्ततीर्थग्रहणादेर्वृत्तिकृत्संमतत्वाच्च जलदानसंख्यातूक्ता
विष्णुपुराणे द्वौत्वर्षीणांयथान्यायंसकृच्चापिप्रजापतेः पितृणांप्रीणनार्थायत्रिरपःपृथिवीपतइति दद्या
दित्युत्तरेणान्वयः व्यासेनाप्युक्ता एकैकमंजलिंदेवाद्वौद्वौतुसनकादयः अर्हंतिपितरस्त्रींस्त्रींस्त्रियएकै
कमंजलिमिति अत्रसनकादयइत्यनेनऋषयोविवक्षिताः योगिनांआश्वलायनभिन्नाप्रतिसनकादीनां
ऋषिषुपरिगणितत्वात् अंजलिर्जलदानंपूर्ववाक्यैकवाक्यत्वात्॥ कासुचित्स्त्रीषुविशेषमाहसांख्यायनः
॥मातृमुख्यास्तुयास्तिस्रस्तासां त्रींस्त्रीन्जलांजलीन् सपत्न्याचार्यपत्नीनांद्वौद्वौदद्याज्जलांजलीइति
सपत्नीसपत्नमाता आचार्यस्तुउपनीयददद्वेदमाचार्यःसउदाहृतइति लक्षणोक्तस्तस्यपत्नींप्रत्यंजलिद्रव्य
भेदान्मंत्रावृत्तिःसंध्यार्घ्यदानवत् एतच्चतर्पणंजलेनकार्यं उदकेनोदकंदद्यात्पितृभ्यश्चकदाचन उत्तीर्यचशु ॥३६॥
चौदेशेकुर्यादुदकतर्पणमिति शंखोक्तेरितिकेचित् तत्रआर्द्रवासाजलेकुर्यादितिपूर्वोक्तहारीतवचनविरोधा

त् शंखवचनंतुशृंगकवस्त्रवताजलेनदेयमितिपरस्तुन्नेयं हारीतः वसिलावसनंशुष्कंस्थलेविस्तीर्णबर्हिषि ॥ विधिज्ञस्तर्पणंकुर्यान्नपात्रेषुकदाचन पात्राद्वाजलमादायशुभेपात्रांतरेक्षिपेत् जलपूर्णेथवागर्तेन स्थलेतुविबर्हिषीति पात्रमाहपितामहः हेमरूप्यमयंपात्रंताम्रकांस्यसमुद्भवम् पितॄणांतर्पणेपात्रं मृन्मयंतुपरित्यजेत्इति मरीचिः सौवर्णेनतुपात्रेणताम्ररौप्यमयेनवा औदुंबरेणखड्गेनपितॄणांदत्तमक्षयमिति योगयाज्ञवल्क्यः यद्युद्धृतंनिषिंचेत्तुतिलान्संमिश्रयेज्जले अतोन्यथातुसव्येनतिलाग्राह्याविचक्षणैरिति अन्यथानुद्धृतेनतर्पणइत्यर्थः अंगिराः मार्जनंतर्पणंश्राद्धंनकुर्याद्वारिधारया कुर्वीतयदिमूढात्मारौरवंनरकंव्रजेदिति अथतिलतर्पणनिषेधः मरीचिः सप्तम्यांभानुवारेचगृहेजन्मदिनेतथा भृत्यपुत्रकलत्रार्थीनकुर्यात्तिलतर्पणं अत्रभृत्यादिकामस्यैवनिषेधोनत्वकामस्येति संग्रहे नंदायांभार्गवदिनेकृत्तिकासुमघासुच ॥ भरण्यांभानुवारेचगजच्छायाव्हयेतथेति बौधायनः विवाहेचोपनयनेचौलेसतियथाक्रमम् वर्षमर्धंतदर्धंचनेत्येकेतिलतर्पणमिति एकेसुख्याः प्रतिप्रसवमाहकात्यायनः उपरागेपितुःश्राद्धेपातेमायांचसंक्रमे निषेधेपीहसर्वत्रतिलैस्तर्पणमाचरेत् पितुर्ग्रहणंमात्रादेरुपलक्षणं सर्वत्रनिषेधेप्राप्तउपरागादिषुप्रति प्रसूयतइतिभावः गर्गः कृष्णोभाद्रपदेमासिश्राद्धंप्रतिदिनंभवेत् पितॄणांप्रत्यहंकार्यंनिषिद्धाहेपितर्पणं पृथ्वीचंद्रोदये तीर्थेतिथि

विशेषेनगंगायांप्रेतपक्षके निषिद्धेपिदिनेकुर्यात्तर्पणंतिलमिश्रितं अत्रतीर्थग्रहणेनैवगंगाप्राप्तौपुनर्गंगा
ग्रहणंसर्वदा त्रतिलप्राप्त्यर्थं तर्पणांतेवसनांजलिर्देयः तन्मंत्रश्चप्रयोगेवक्ष्यते योगयाज्ञवल्क्यः वस्त्र
निष्पीडितंतोयंस्नातस्योच्छिष्टभागिनां भागधेयंश्रुतिःप्राहतस्मान्निष्पीडयेत्स्थले अन्नप्रकिरवत्तस्या
प्यपसव्येनपीडनं स्मृत्यंतरे वस्त्रंचतुर्गुणीकृत्यपीडयेच्चजलाद्बहिः वामप्रकोष्ठेनिक्षिप्यद्विराचम्य
शुचिर्भवेत् अन्यत्रनिक्षिपेद्यस्तुपितृहानोपजायते स्नानवस्त्रंतर्पणात्प्राङ्निष्पीडयेत् तदाहवृद्ध
योगी यावद्देवानृषींश्चैवपितृंश्चापिनतर्पयेत् तावन्नपीडयेद्वस्त्रंयेनस्नातोभवेन्नरइति तर्पणाक
रणेप्रत्यवायश्रुतिः पुराणसमुच्चये देवतांश्चमुनींश्चैवपितृभ्योह्निनतर्पयेत् देवादीनामृणीभूत्वानर
कंसव्रजेदथेति शाकलः तर्पणंनैत्यकंकुर्याद्ब्रह्मयज्ञपुरःसरम् ग्रहणादिनिमित्तेषुब्रह्मयज्ञंविनाभ
वेदिति स्मृतिसारे जलांतेतिलदर्भास्तुयोनुष्ठानाययाचते नानुष्ठानफलंतस्यदातुरेवहितत्फलमि
ति ब्रह्मयज्ञादौऋष्यादिस्मरणंनकुर्यादित्याह भगवान् नचस्मरेदृषिंछंदःश्राद्धेवैतानिकेमखे ब्रह्म
यज्ञेनचैवेनहृत्तथोंकारंतुवर्जयेत् कारिकायां दर्भान्बहूनृशुचौदेशेप्रागग्रानास्तृणात्यथ दर्भेषूपविशे
त्कर्मण्यत्रप्राङ्मुखएववसन् कृत्वोपस्थेकरेसव्येउत्तानेप्राग्दिगंगुलौ पवित्रेस्थापयेदुक्तेप्रागग्रेदक्षिणे
नतु न्यंचंप्रागंगुलंतेनसंदध्याद्दक्षिणंकरं ॐ पूर्वाव्याहृतीस्तिस्रःसमग्राश्चसकृद्वदेत् पश्चात्स्व ॥३७॥

र्धर्नशःसर्वांसावित्रींत्रिर्वदेदथ ऋग्विधाने अग्निमीळेजपेत्सूक्तंपापघ्नंश्रीकरंपरम् पारायणफलंतस्यदेवा
नांस्यात्सहस्रशइति अथब्रह्मयज्ञप्रयोगः वेदपुरुषायनमइतिप्रदक्षिणीकृत्यासनेउपविश्यद्विराचम्यप्रा
णानायम्य ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंब्रह्मयज्ञेनयक्ष्येइतिसंकल्प्य पृथिवीतिमंत्रं० विद्यु
दसिविद्यमेपाप्मानमृतात्सत्यमुपैमिइतिमंत्रेणापउपस्पृश्य वामजानूपरिदक्षिणंपादंनिधायस्थलसंकोचे
वामपादोपरिदक्षिणांगुष्ठंनिधायदक्षिणजानुनिकुशपवित्रदर्भप्रागंगुलिमुत्तानंसव्यपाणिंनिधाय तदुपरिद
क्षिणंपाणिंप्रागंगुलिमेवंन्यंचंनिधायव्याहृतिपूर्वांपच्छोर्ध्वर्चशःसर्वांसावित्रींपठित्वा ॐ भूर्भुवःस्वः तत्स
वितुर्वरेण्यं॥ भर्गोदेवस्यधीमहि॥ धियोयोनःप्रचोदयात्॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥ धियोयो-
नःप्रचोदयात्॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहिधियोयोनःप्रचोदयात्॥ ॐ अग्निमीळेपुरोहितंयज्ञस्य
देवमृत्विजं॥ होतारंरत्नधातमं॥ अग्निःपूर्वेभिर्ऋषिभिरीड्योनूतनैरुत ॥ सदेवांएहवक्षति॥ अग्निनारयिमश्न
वत्पोषमेवदिवेदिवे॥ यशसंवीरवत्तमं॥ अग्नेयंयज्ञमध्वरंविश्वतःपरिभूरसि॥ सइद्देवेषुगच्छति॥ अग्निर्होता
कविक्रतुःसत्यश्चित्रश्रवस्तमः॥ देवोदेवेभिरागमत्॥ १॥ यदंगदाशुषेत्वमग्नेभद्रंकरिष्यसि॥ तवेत्तत्सत्यमंगिरः
॥उपत्वाग्नेदिवेदिवेदोषावस्तर्धियावयम्॥ नमोभरंतएमसि॥ राजंतमध्वराणांगोपामृतस्यदीदिविं॥ वर्धमानं
स्वेदमे॥ सनःपितेवसूनवेऽग्नेसूपायनोभव॥ सचस्वानस्वस्तये॥ २॥ अग्निर्वैदेवानामवमोविष्णुःपरमः॥ अथम

आ० ह्यव्रतं एषपंथाएतत्कर्म अथातःसंहितायाउपनिषत् विदामघवन्विदा महाव्रतस्यपंचविंशतिंसामिधेन्यः र्क
॥३८॥ इषेत्वोर्जेत्वा अग्नआयाहिवीतये शन्नोदेवीरभिष्टये अथैतस्यसमाम्नायस्य समाम्नायःसमाम्नातः मयर
सतजभनलगसंमितं गौःग्मा पंचसंवत्सरमयं अथशिक्षांप्रवक्ष्यामि वृद्धिरादैच्यदिंद्रोदाशराज्ञेमानुषंव्य
गाहथाः इदंजनाउपश्रुत योगीश्वरंयाज्ञवल्क्यं नारायणंनमस्कृत्य अथातोधर्मंव्याख्यास्यामः अथा
तोधर्मजिज्ञासा अथातोब्रह्मजिज्ञासा इतिपठित्वा तच्छंयोरावृणीहेगातुंयज्ञायगातुंयज्ञपतयेदैवीस्व
स्तिरस्तुनःस्वस्तिर्मानुषेभ्यः ऊर्ध्वंजीगातुभेषजं॥ शन्नोअस्तुद्विपदेशंचतुष्पदे नमोब्रह्मणेनमोअस्त्वग्न
येनमःपृथिव्यैनमओषधीभ्यः नमोवाचेनमोवाचस्पतयेनमोविष्णवेमहतेकरोमि इतित्रिरुच्चार्य वृष्टिर
सिवृश्चमेपाप्मानमृतात्सत्यमुपागामित्यपःस्पृष्ट्वा सव्यान्वारब्धेनदक्षिणहस्तेनप्रजापत्यादिमंत्रैर्यथा
वचनंतृप्यतुतृप्यतांतृप्यंत्वित्यंतैस्तर्पयेत् अत्रद्यावापृथिवीतृप्यतामितिलोटः प्रथमपुरुषद्विवचनंप्रयो-
क्तव्यम् तृप्येतामितिलोडात्मनेपदंप्रयुंजतेप्राचः तदशुद्धं तृपप्रीणनइत्यस्यधातोःपरस्मैपदित्वात्
नचलिङिःपरस्मैपदेभवेदितिवाच्यम् येत्वान्येआचार्यास्ते सर्वेतृप्यंत्वितिवक्तुराश्वलायनस्यलोट्प्रयोग
स्यैवविवक्षितत्वात् प्रजापतिस्तृप्यतु ब्रह्मा तृप्यतु वेदास्तृप्यं० देवास्तृप्यं० ऋषयस्तृप्यं० सर्वाणिछंदां ॥३८॥
सितृप्यंतु ओंकारस्तृप्य० वषट्कारस्तृ० व्याहृतयःस्तृप्य० सावित्रीतृप्य० यज्ञास्तृप्यं० द्यावापृथिवीतृप्य

ताम् अंतरिक्षंतृप्य॰ अहोरात्राणितृप्यं॰ सांख्यास्तृप्यं॰ सिद्धास्तृप्यं॰ समुद्रास्तृप्यं॰ नद्यस्तृप्यं॰ गिरय
स्तृप्यंतु क्षेत्रौषधिवनस्पतिगंधर्वाप्सरसस्तृप्यं॰ नागास्तृप्यं॰ वयांसितृप्यं॰ गावस्तृप्यं॰ साध्यास्तृप्यं॰
विप्रास्तृप्यं॰ यक्षास्तृप्यं॰ रक्षांसितृप्यंतु भूतानितृप्यंतु एवमंतानितृप्यंत्वित्येकोनत्रिंशन्मंत्रैः कुशाग्रैर्दे
वतीर्थेनैकैकवारंतर्पयित्वा निवीती शतर्चिनस्तृप्यं॰ माध्यमास्तृप्यं॰ गृत्समदस्तृप्यतु विश्वामित्रस्तृप्य॰ वा
मदेवस्तृप्यतु अत्रिस्तृप्य॰ भरद्वाजःस्तृप्य॰ वसिष्ठस्तृप्य॰ प्रगाथास्तृप्यं॰ पावमान्यस्तृप्यं॰ क्षुद्रसूक्तास्तृ
प्यं॰ महासूक्तास्तृप्यंत्विति द्वादशमंत्रैः कुशमध्येनऋषितीर्थेनाद्भिः प्रत्येकंतर्पयित्वा प्राचीनावीती सुमं
तुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्यास्तृप्यंतु जानंतिबाहविगार्ग्यगौतमशाक
ल्यबाभ्रव्यमांडव्यमांडूकेयास्तृप्यंतु गर्गीवाचक्नवीतृप्य॰ वडवाप्रातीथेयीतृ॰ सुलभामैत्रेयीतृप्यतु क
होळंतर्पयामि कौषीतकंत॰ महाकौषीतकंतर्प॰ पैंग्यंतर्प॰ महापैंग्यं॰ सुयज्ञंत॰ सांख्यायनंत॰ ऐतरेयंत॰
महैतरेयंत॰ शाकलंत॰ बाष्कलंत॰ सुजातवक्त्रंत॰ औदवाहिंत॰ महौदवाहिंत॰ सौजामिंत॰ शौनकंतर्पया॰
आश्वलायनंत॰ येचान्येआचार्यास्तेसर्वेतृप्यंत्विति त्रयोविंशतिमंत्रैः पितृतीर्थेनकुशमूलैस्तर्पयेत् ततोस्म
त्पितरममुकशर्मणममुक गोत्रंवसुरूपंस्वधानमस्तर्पयामि एवंपितामहादींस्तर्पयित्वा आब्रह्मस्तंबपर्यंतं
देवर्षिपितृमानवाः तृप्यंतुपितरःसर्वेमातृमातामहादयः अतीतकुलकोटीनांसप्तद्वीपनिवासिनां आ

ब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकमितित्रिर्दत्वा येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः तेगृण्हं
तुमयादत्तंवस्त्रनिष्पीडनोदकमिति चतुर्गुणमुपरिदशंवस्त्रंस्थलेवामभागेनिष्पीड्योपवीतीद्विराचामेत्
अथाशौचेसतिनित्यस्नानादिकंकार्यंस्मृत्यर्थसारे सूतकादौनित्यस्नानशौचान्नबलिदानप्राणाहुतिपा
त्रकरणादयोभुजिनियमाः अस्पृश्यस्पर्शनस्नानादिकंचेतिसर्वंकर्तव्यमेवेति अत्रनित्यस्नाननिषेधकव
चनाभावात्संकल्पमार्जनाघमर्षणांगसहितंकार्यं संध्याप्रकारमाह जाबालिः अध्यांतामानसीसंध्या
प्राणायामविवर्जिताइति भरद्वाजः सूतकेमृतकेवा विप्राणायाममंत्रकं तथामार्जनमंत्रास्तुमनसो
च्चार्यमार्जयेत् गायत्रींसम्यगुच्चार्यसूर्यायार्घ्यंनिवेदयेत् मार्जनंतुनवाकार्यमुपस्थानंनचैवहि गाय
त्रींदशवारंजपेदित्याश्वलायनः आपन्नश्चाशुचिःकालेतिष्ठन्नपिजपेद्दशेति आपन्न आपद्युक्तः अ
शुचिराशौचवान्। सूतकेमृतकेचैवरोगोत्पत्तौतथाध्वनि मानसींचजपेत्संध्यांकुशवारिविवर्जितः
पराशरः देशभंगेप्रवासेचव्याधिषुव्यसनेषुच रक्षेदेवस्वदेहंतुपश्चाद्धर्मंसमाचरेत्इति सूतकेविष्णु
पूजानकार्या तदुक्तंसूतके इत्युपक्रम्यहेमाद्रौवाराहे पूर्वसंकल्पितंयत्तुव्रतंसुनियतव्रतैः तत्कर्तव्यं
नरैःश्राद्धदानार्चनविवर्जितमिति पंचयज्ञाअपिनकार्याः होमंतत्रप्रकुर्वीतशुष्कान्नेनफलेनवा पंच ॥३९॥
यज्ञविधानंतुनकुर्यान्मृत्युजन्मनोरितिसंवर्त्तनिषेधात् होमः सायंप्रातःक्रियमाणोनित्यहोमः सतुका

र्यएव याज्ञवल्क्योपि वैतानौपासनाःकार्याःक्रियाश्चश्रुतिचोदनादिति यद्यपिअत्रकार्याइत्युक्तंतथाप्यस
गोत्रेणकारणीयाः तथाचबृहस्पतिः सूतकेमृतकेचैवअशक्तौश्राद्धभोजने प्रवासादिनिमित्तेषुहावयेन्नतु
हापयेदिति जातूकर्ण्योपि सूतकेतुसमुत्पन्नेस्मार्तकर्मकथंभवेत् पिंडयज्ञंचरुंहोमंसगोत्रेणकारयेदि
ति पिंडयज्ञःपिंडपितृयज्ञः चरुहोमः स्थालीपाकश्रवणाकर्माश्वयुज्याग्रयणप्रत्यवरोहणाष्टकादिहोमः
अत्रद्रव्यत्यागस्तुयजमानेनकार्यइतिविज्ञानेश्वरः अपरेतु कल्पसूत्र भाष्यकारादयः सर्वेनिबंधकारा
वैतानिकेहोमकर्मणिस्वकर्तृत्वंवदंति कर्मवैतानिकंकार्यंस्नानोपस्पर्शनात्स्वयं जन्महान्योर्वितानस्यक
र्मत्यागोनविद्यते शालाग्नौकेवलंहोमःकार्यएवान्यगोत्रजैरित्यादिहारीतवचनात् प्रसंगाच्छूद्रजातीनांपि
तृसंतृप्तिकारणं तर्पणंप्रवदाम्यत्रमूलवाक्यानुसारतः मदनपारिजातेयोगयाज्ञवल्क्यः तृप्यंत्वितिसमुच्चा
र्यतृप्यतामित्यथापिवा विधितःप्रक्षिपेत्तोयंदेवादीनामशेषतः देवानाहसएव ब्रह्माणंतर्पयेत्पूर्वंविष्णुंरुद्रं
प्रजापतिम् देवांश्छंदांसिवेदांश्चऋषींश्चैवसनातनान् आचार्यांश्चैवगंधर्वानाचार्यतनयांस्तथा संवत्स
रंसावयवंदेवीश्चाप्सरसस्तथा तथादेवानुगान्नागान्सागरान्पर्वतानपि सरितोथमनुष्यांश्चयक्षान्र
क्षांसिचैवहि पिशाचांश्चसुपर्णांश्चभूतान्यथपशूंस्तथा वनस्पतीनोषधीश्चभूतग्रामंचतुर्विधम् तत्रै
वविष्णुसमुच्चये ततःकृत्वानिवीतंतुयज्ञसूत्रमतंद्रितः प्राजापत्येनतीर्थेनमनुष्यांस्तर्पयेत्पृथक् मनु

ष्यानाह कार्ष्णाजिनिः सनकश्चसनंदश्चतृतीयश्चसनातनः कपिलश्चासुरिश्चैववोढुःपंचशिखस्तथा
एतेब्रह्मसुताःसप्तमनुष्याःपरिकीर्तिताः मरीचिमत्रिमंगिरसंपुलस्त्यंपुलहंक्रतुं प्रचेतसंवसिष्ठंचभृगुं
नारदमेवच देवब्रह्मऋषीन्सर्वांस्तर्पयेदक्षतोदकैरितियोगयाज्ञवल्क्यः अपसव्यंततःकृत्वाभूत्वा
चपितृदिङ्मुखः पितॄन्दिव्यानदिव्यांश्चपितृतीर्थेनतर्पयेत् दिव्यावस्वादयः अदिव्याःस्वपित्रादयइ
ति मदनपारिजाते अथप्रयोगः स्नानोत्तरमासनादावुपविष्टःसकुशहस्तद्वयेनदेवतीर्थेनतर्पयेत् ब्र
ह्मातृप्यतां विष्णुस्तृप्यतां रुद्रस्तृप्य० प्रजापतिस्तृप्य० देवास्तृप्यं० वेदास्तृप्यं० ऋषयस्तृ० पुराणाचार्या-
स्तृ० गंधर्वास्तृप्यंतां इतराचार्यास्तृ० संवत्सरःसावयवस्तृप्यताम् देव्यस्तृ० अप्सरसस्तृप्यं० देवानुगास्तृ०
नागास्तृ० सागरास्तृ० पर्वतास्तृ० सरितस्तृप्यं० मनुष्यास्तृ० यक्षास्तृप्यंतां रक्षांसि तृ० पिशाचास्तृ० सुप
र्णास्तृ० भूतानितृ० पशवस्तृप्यंतां वनस्पतयस्तृप्यं० ओषधयस्तृप्यंतां भूतग्रामश्चतुर्विधस्तृप्य० ॥२८॥
अथऋषयः ॥निवीती॥ उदगग्रदर्भमध्येनऋषितीर्थेनद्वौद्वावंजली दद्यात् सनकस्तृप्यतु सनंदनस्तृ०
सनातनस्तृ० कपिलस्तृ० आसुरिस्तृ० वोढुस्तृ० पंचशिखस्तृ० मरीचिस्तृ० अत्रिस्तृ० अंगिरास्तृ० पुलस्त्यस्तृ०
पुलहस्तृ० क्रतुस्तृ० प्रचेतास्तृ० वसिष्ठस्तृ० भृगुस्तृ० नारदस्तृ० १७ ततः प्राचीनावीती दक्षिणास्यःपितृ
तीर्थेनत्रींस्त्रीनंजलीन्संप्रयच्छेत् वसवस्तृप्यंतां रुद्रास्तृप्यं० आदित्यास्तृ० मरुतस्तृ० अश्विनौतृप्येतां

ततः पित्रादीनस्मत्पिता अमुकदासो ऽमुकगोत्रस्तृप्यतां अत्र वस्त्रादिनामसहितानामसहितानां वा पित्रादीनां तर्पणं कार्यमिति मदनपारिजातः एवं पितामहप्रपितामहयोरपि अस्मन्माता अमुकगोत्रा अमुकदेवी तृप्यताम् एवं सर्वेषां प्रमीतानां तर्पणं कृत्वा ततः तिलांजलिं निक्षिपेदेतैर्मंत्रैः देवास्तथा सुरा यक्षा गंधर्वोरगराक्षसाः पिशाचा गुह्यकाः सिद्धाः कूष्मांडा भैरवादयः जलेचरा भूनिलया वाय्वाधाराश्च जंतवः तृप्तिमेते न यांत्वाशु मद्दत्तेनांबुनाखिलाः नरकेषु समस्तेषु यातनासु च ये स्थिताः तेषामाप्यायनायैतद्दीयते सलिलं मया ये ऽबांधवा बांधवा ये ये ऽन्यजन्मनि बांधवाः ते तृप्तिमखिला यांतु यश्चास्मत्तो ऽभिवांछति यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः मातृवंश्या मृता ये च पितृवंश्यास्तथैव च तेषां हि० ततो ये के चास्मत्कुले इति मंत्रेण वस्त्रं निष्पीड्याचामेत् जीवत्पितुर्वस्त्रादिपंचस्थानेषु विशेषमाह स्मृतिचंद्रिकायाम् योगयाज्ञवल्क्यः कव्यवाडनलः सोमो यमश्चैवार्यमा तथा अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदो ऽपि च यदि स्याज्जीवत्पितृक एतान्विद्यात्ततः पितॄन् तिलतर्पणनिषिद्धकालस्तु मत्कृतश्राद्धचंद्रिकायां द्रष्टव्यः अत्र वक्तव्यमपि शूद्राणां वैश्वदेवादिकर्मानंतरं स्नानान्नोच्यत इत्यास्तां तावत् इत्याचारार्के शूद्रतर्पणप्रयोगः प्रासंगिकः अथ वैश्वदेवः स च वैश्वदेवं पुरा कृत्वा नित्ये चाभ्युदये तथा स्वाभीष्टदेवतादि

भ्योनैवेद्यंविनिवेदयेत् अकृत्वावैश्वदेवंतुनैवेद्यंयोनिवेदयेत् तदन्नंचनगृण्हंतिदेवाविष्ण्वादयो
भुवमित्याश्वलायनस्मृतेः सएषदेवयज्ञोहरहर्गोदानसंमितः सर्वाभीष्टप्रदःस्वर्ग्योपवर्ग्यश्चतस्मादेन
महरहःकुर्वीततमेनंवैश्वदेवंकृतशेषेणपृथगन्नेनवाकुर्यान्नास्यशेषेणवैश्वदेवंकुर्यादिति गृत्यपरिशि
ष्टाच्च नैवेद्यदर्शनात्पूर्वंकार्यः सएषदेवयज्ञश्चावाहनादिनैवेद्यांतः पंचायतनपूजारूपोदेवयज्ञइत्यर्थः
यत्तुविष्णोर्निवेदितान्नेनयष्टव्यंदेवतांतरं पितृभ्यश्चापितद्देयंतदानंत्यायकल्पतेइतिस्कांदवचनंतत्
विगीतत्वान्नादरणीयमथवाकेवलवैष्णवपरं अथवैश्वदेवविधिः कारिकायां गृहस्थोवैश्वदेवाख्यं
कर्मप्रारभतेदिवा तंत्रंनास्त्यत्रभगवद्वृत्तिकारवचोयथा औपासनाग्निमन्यंवासमिध्यायहविर्भुजम्
अन्यंपाकाग्निंसमिध्यप्रज्वाल्य प्रज्वालनंमुखेनैवकार्यमित्याहस्मृतिचंद्रिकायांकात्यायनः जुहुयं
श्चकुतेचैवपाणिनाशूर्पदारुभिः नकुर्यादग्निधमनंनकुर्याद्व्यजनादिना मुखेनैवधमेदग्निंमुखादेषो
व्यसीयतइति मुखेनधमनंनलिकादिव्यवधानेननसाक्षात्कार्यंउच्छिष्टपातसंभवात् आश्वलायनः
सायंप्रातर्वैश्वदेवोकर्तव्योबलिकर्मच अनश्नतापिकर्तव्यावन्यथाकिल्बिषीभवेत् वैश्वदेवोदिवान
क्तंनभवेच्चपृथक्पृथक् प्रातरेवद्विरावृत्त्याकुर्याद्वासहितोद्विजइतिशातातपः वैश्वदेवःप्रकर्तव्यःपं ॥४१॥
चसूनापनुत्तये पंचसूनागृहस्थस्यवर्ततेहरहःसदा कंडणीपेषणीचुल्लीजलकुंभउपस्करः सूनाहिं

सास्थानानि उपस्करः शूर्पादिः अथवैश्वदेवविधिर्गृह्यपरिशिष्टे अथवैश्वदेवोदिवास्यप्रारंभोनात्रपा
कयज्ञतंत्रमौपासनंपचनंवापरिसमुह्यपर्युक्ष्यायतनमलंकृत्यसिद्धंहविष्यमधिश्रित्याद्भिःप्रोक्ष्योदगु
द्वास्याग्नेः प्रत्यग्दर्भेषुनिधायसर्पिषाभ्यज्यसव्यंपाणितलंदक्षिणेनाच्छाद्यावदानेनपाणिनाजुहु
यादन्नाभावेतंडुलादिभिःकुर्यादंतेचपरिसमुह्यपर्युक्षेदेकेनात्रतंत्रमितिशौनकः त्रिधाविभज्यसिद्धान्नं
त्रिःप्रोक्ष्यपुरतःस्थितं पर्यग्निकरणंकुर्यात्सिथान्नस्याप्ययंविधिः छंदोगपरिशिष्टे यस्मिन्नग्नौभवेत्पा
कोवैश्वदेवस्तत्रवै उत्तानेनतुहस्तेनत्वंगुष्ठाग्रेणपीडितम् संहतांगुलिपाणिस्तुवाग्यतोजुहुयाद्ध
विरितिव्यासः जुहुयात्सर्पिषाभ्यक्तंतैलक्षारविवर्जितम् दध्यक्तंपायसाभ्यक्तंतदभावेंभसापिवा
व्यासः होमान्नदानरहितंनभोक्तव्यंकदाचन आश्वलायनः वसतामेकपाकेनविभक्तानामपिप्रभुः
एकस्तुचतुरोयज्ञान्कुर्याद्वाग्यज्ञपूर्वकान् वाग्यज्ञोब्रह्मयज्ञःसतुसर्वेषांपृथगेवभवति पृथगप्येकपा
कानांब्रह्मयज्ञोद्विजन्मनाम् अविभक्ताविभक्ताश्च पृथक्पाकाद्विजातयः कुर्युःपृथक्पृथक्यज्ञान्भोजना
त्प्रागदिनेदिने गोभिलः यद्येकस्मिन्काले बहुधान्नंपच्येतगृहपतिर्महानसादेवैतद्बलिंतत्रकुर्वीतेति
आश्वलायनमते विभक्तानामप्येकपाकेज्येष्ठस्यैवाधिकारोनपृथक्पाकभेदेविभक्तानामपिभिन्नएवा
धिकारइति गोभिलमतेतु अविभक्तभ्रातृपुत्रादिभिःपृथक्पाकेकृतेसत्यपिज्येष्ठस्यैवाधिकारोनान्ये

आ० षां अन्नविभक्तानांपृथक्पाकेपृथक्वैश्वदेवाकरणाकरणविरोधेप्राप्तेव्यवस्थितोयंविकल्पः आश्व कं
॥ ४२ ॥ लायनैस्तदुक्तेःपृथक्कार्यः तदन्यैरेक एवेति देवताक्रममाहाश्वलायनः अथसायंप्रातःसिद्धस्यहवि
ष्यस्यजुहुयादग्निहोत्रदेवताभ्यःसोमायवनस्पतयेग्नीषोमाभ्यामिंद्राग्निभ्यांद्यावापृथिवीभ्यांधन्वंतरयइंद्रायविश्वेभ्योदे
वेभ्योब्रह्मणेस्वाहेत्यथबलिहरणमेताभ्यश्चैवदेवताभ्योद्भ्यओषधिवनस्पतिभ्योगृहायगृहदेवताभ्यो
वास्तुदेवताभ्यइंद्रायेंद्रपुरुषेभ्योयमाययमपुरुषेभ्योवरुणायवरुणपुरुषेभ्यःसोमायसोमपुरुषेभ्यइ
ति प्रतिदिशंब्रह्मणेब्रह्मपुरुषेभ्यइति मध्येविश्वेभ्योदेवेभ्यःसर्वेभ्योभूतेभ्योदिवाचारिभ्यइतिदिवा
नक्तंचारिभ्यइतिनक्तं रक्षोभ्यइत्युत्तरतः स्वधापितृभ्यइति प्राचीनावीतीशेषंदक्षिणानिनयेदिति अ
त्रस्वधापितृभ्यइतिगृह्यव्याख्यानेवृत्तिकृतैवपितृयज्ञः पितृयज्ञार्थमन्वहंब्राह्मणभोजनंकर्तव्यमिति
यदुक्तंतत्पंचमहायज्ञांतःपातिपितृयज्ञविषयंनतुनित्यश्राद्धविषयंतस्यस्मृतितोविधानात् यातुश्रा
द्धंवापितृयज्ञःस्यात्पित्र्योबलिरथापिवेति कात्यायनोदाहृतवचनेनित्यश्राद्धपितृयज्ञोक्तिः सायेषांसूत्रे
पित्र्यबलिर्नोक्तस्तेषांनित्यश्राद्धमेवपितृयज्ञइतिसूचनाय ननुतर्ह्याश्वलायनादीनांस्वधापितृभ्यइति
पित्र्यबलिनैवपितृ तृप्तिसिद्धेर्नित्यश्राद्धेनालंइतिचेन्न तस्यदेवताभेदेनकर्मांतरत्वात् तथाहि पंचयज्ञप्र ॥ ४२ ॥
करणेस्वधापितृभ्यइत्यविशेषेणोक्तत्वादेतद्दिव्यपितृविषयंनित्यश्राद्धंतु नित्यश्राद्धंतुपन्नामदेवहीनंतदु

च्यते ननुषट्पुरुषंदेयंदक्षिणापिंडवर्जितमितिपुराणवचनेदेवतासंख्याविधानान्नित्यश्राद्धंमनुष्यपितृ
विषयं तस्माद्जीवत्पितृकेणदेवपितृमनुष्यपितृतृप्त्यर्थंकर्मद्वयंकर्तव्यम् जीवत्पितृकेणवैश्वदेवप्रक
रणोक्तएवपितृयज्ञःकार्यइत्यलंविस्तृत्या विश्वदीपे पितृयज्ञान्नशेषेणतथानैर्ऋत्यकोणके वायव्य
कोणेतुतथाशक्तोबलिमथाहरेत् आहजैमिनिः यत्किंचिज्जुहुयादग्नौतत्सर्वंत्यागपूर्वकम् अन्यथा
कुरुतेयस्तुनरकेसविपच्यते शौनकः भूतयज्ञेपिमंत्राणांस्वाहाकारोभवेदिहेति सकृत्कृतेनवैश्व
देवेनपक्वःपक्ष्यमाणश्चसर्वोपिपाकःसंस्कृतोभवतीत्याह गोभिलः यद्येकस्मिन्कालेबहुधान्नंपच्ये
तगृहपतिर्महानसादावेतद्बलिंसकृदेवकुर्वीतेति अन्नाभावेद्रव्यांतरंचतुर्विंशतिमते अलाभेयेन
केनापिफलशाकोदकादिभिः पयोदधिघृतैर्वापिवैश्वदेवंस्रुवेणतु हस्तेनान्नादिनाकुर्यादद्भिरंजलि
नाजले तत्रापियददनीयंतेनैवहोमः तथाचपरिशिष्टे शाकंवायदिवापत्रंमूलंवायदिवाफलं संक
ल्पयेद्यदाहारंतेनैवजुहुयाद्धविः पाणिनैकेनजुहुयात्पृदिसव्यंनिधायवै वर्ज्यद्रव्याणिसंग्रहे कोद्र
वंचणकंमाषंमसूरंचकुलित्थकं क्षारंचलवणंनैववैश्वदेवेविवर्जयेत्इति अत्रवैश्वदेवयज्ञत्रयंभ
वति देवयज्ञोभूतयज्ञःपितृयज्ञइतिपूर्वोक्तसूत्रात् तत्रप्रातर्वैश्वदेवमादौकृत्वासायंवैश्वदेवइतिक्रमो
नतुसायंप्रातरितिप्रथमंदिवाचारिभ्योबल्युक्तेः अत्रस्रुवाकारोध्वजाकारोनराकारोवल्मीकाकारश्चक्राका

आ० रइतिपंचविधाकारेभूतयज्ञेसुख्यानक्रकृतिरित्याह शौनकः पंचस्वेनेषुविप्राणांसुख्यानक्राकृतिर्भवेत् कौ०
॥४३॥ चक्राकारसमथाप्यरंकुर्यादग्निसमीपतः चक्राकारेणयोविप्रःसदाभूतबलिंहरेत् सर्वपापविनिर्मुक्तोविष्णु
सायुज्यमाप्नुयादिति देवभूतशेषेणभूतयज्ञंकुर्यादित्याह योगयाज्ञवल्क्यः देवेभ्यस्तुहुतादन्नाच्छे
षाद्भूतबलिंहरेत् भूतयज्ञःसवैप्रोक्तोभूतिदःसर्वदेहिनामिति एवंकृतवैश्वदेवस्यबहिर्बलिमाहमनुः
शुनांचपतितानांचश्वपचांपापरोगिणां वायसानांकृमीणांचशनकैर्निक्षिपेद्भुवि शाकलः सायंस्या
त्पितृयज्ञांतंब्रह्मयज्ञविवर्जितमिति पितृयज्ञांतमित्युक्त्यामनुष्ययज्ञस्यापिनिवृत्तिःप्रतीयते अथवै
श्वदेवप्रयोगः अग्नेःपश्चात्प्राङ्मुखउपविश्याचम्यदेशकालौनिर्दिश्यममोपात्तदुरितक्षयात्मसंस्कारा
न्नसंस्कारद्वाराचप्रातर्वैश्वदेवंचकरिष्ये सायंतुसायंवैश्वदेवमिति द्वयोस्तंत्रेणानुष्ठानपक्षेतुप्रातःसा
यंवैश्वदेवौतंत्रेणकरिष्येइतिसंकल्प्य एह्यग्नेराहूगणोगोतमोग्निस्त्रिष्टुप् अग्न्यावाहनेविनियोगः
ॐ एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभवानः अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसाय
देवान् इत्यावाह्य वेणुधमन्याप्रबोध्य चत्वारिशृंगागोतमोवामदेवोग्निस्त्रिष्टुप् अग्निमूर्तिध्यानेविनियो
गः ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यां ॥४३॥
न आविवेश इतिध्यात्वा परिसमूह्यपर्युक्षणे कृत्वा सिद्धमन्नंपात्रांतरेनिधायाग्नावधिश्रित्यप्रोक्ष्योदगु

ह्वास्य पश्चिमभागेनिधाय त्रिधाविभज्य त्रिःप्रोक्ष्य पर्यग्निकृत्वा सर्पिषाभ्यज्याग्निंविश्वानिनइत्यलंकृ
त्य सव्यंपाणितलंहृदिन्यस्य दक्षिणहस्तेनदक्षिणभागादन्नमादायांगुष्ठाग्रेणपीडितंसंहतांगुल्युत्तान
पाणिनासमंत्रंजुहुयात् तत्रमंत्रः सूर्यायस्वाहा सूर्यायेदंनममेत्यादित्यागः सर्वत्रापिज्ञेयः प्रजापतये
स्वाहेत्युच्चैरुक्त्वैव सोमायवनस्पतये॰ अग्नीषोमाभ्यां॰ इंद्राग्निभ्यां॰ द्यावापृथिवीभ्यां॰ धन्वंतरये॰ इंद्रा
य॰ विश्वेभ्योदेवेभ्यः॰ ब्रह्मणेस्वा॰ सायंतनवैश्वदेवाहुतयोग्नयेस्वाहा प्रजापतयेइत्यादिब्रह्मणेइत्यंतं
पूर्ववन्नवाहुतीर्हुत्वोंचमइत्युपस्थाय परिसमूहनपर्युक्षणेकृत्वाविभूतिंधारयेदितिदेवयज्ञः अथभूतय
ज्ञः भूमिंप्रोक्ष्यमध्यभागादन्नमादाय प्राचीमारभ्यईशानीपर्यंतंचक्राकारंनैरंतर्येणसूर्यायस्वाहेतिपू
र्वोक्तैर्दशभिः अद्भ्यःस्वाहा ओषधिवनस्पतिभ्यः॰ गृहाय॰ गृहदेवताभ्य॰ वास्तुदेवताभ्यःस्वाहेतिपंचभि
श्चदत्वाचक्राद्बहिः प्राच्यांप्राक्संस्थंइंद्रायइंद्रपुरुषेभ्यः॰ दक्षिणतउदक्संस्थं यमाययमपुरुषेभ्यः॰ पश्चि
मतः प्राक्संस्थं वरुणायवरुणपुरुषेभ्यः॰ उत्तरस्यामुदक्संस्थं सोमायसोमपुरुषेभ्यः॰ चंक्रमध्येब्रह्मणे
स्वा॰ तत्प्राच्यांब्रह्मपुरुषेभ्यः॰ ब्रह्मणोदक्षिणतोविश्वेभ्योदेवेभ्यः॰ ब्रह्मणः पश्चिमतः सर्वेभ्योभूतेभ्यः॰
ब्रह्मणउत्तरतोदिवाचारिभ्यः॰ चक्रादुत्तरतोरक्षोभ्यःस्वाहेतिदत्वापउपस्पृश्य तदुत्तरतोभूमिंप्रोक्ष्य द्वितीयभू
तयज्ञंकुर्यात् तत्रसूर्यपदस्थानेग्निपदंदिवापदस्थानेनक्तमितिविशेषः शेषंपूर्ववदिति भूतयज्ञः अथपितृय

आ० त्तः प्राचीनावीती आग्नेय्याभिमुखः सव्यंजान्वाच्योत्तरभागादंगुष्ठपर्वमात्रमन्नंगृहीत्वापराचीनपाणिना कृ०
॥४५॥ चक्राद्दक्षिणतः स्वधापितृभ्यइतिमंत्रेणबलिंदत्वापउपस्पृश्य द्वितीयचक्राग्नेयभागेचतथैवदत्वापउपस्पृ
श्य पितृयज्ञान्नशेषेणैवचक्राद्बहिर्नैर्ऋत्यकोणेधामायस्वाहा चक्राद्वायव्यकोणेशबलायस्वाहेत्युभय
त्रबलिंदत्वा गृहांगणेजलमासिच्य श्वचांडालपतितभूतवायसेभ्योविकिरेत् येभूताःप्रचरंतिदिवान
क्तंबलिमिच्छंतोविदुरस्यप्रेष्ठाः तेभ्योबलिंपुष्टिकामोददामिमयिपुष्टिंपुष्टिपतिर्ददातुस्वाहा रात्रौचे
न्नक्तमितिब्रूयादितिशौनकोक्तचक्राकारःप्रयोगः वृत्तिकृत्तुनराकारमंगीकृत्यवैलक्षण्यमाह तत्रसू
र्यादिब्रह्मांतान्दशबलीन्प्राक्संस्थान्दत्वाकिंचिदंतरालंत्यक्त्वाऽभ्यइत्यादिवास्तुदेवताभ्यइत्यंतान्पंच
बलीन्दत्वाऽभ्योदत्तबलेः पश्चिमतइंद्रायतदुत्तरतइंद्रपुरुषेभ्यः अंतरालदक्षिणतोयमायतदुत्तरतोय
मपुरुषेभ्यः ब्रह्मणेदत्तबलेः प्राक्वरुणायतदुत्तरे वरुणपुरुषेभ्यःअंतरालादुत्तरतःसोमाय०सोमपु
रुषेभ्यः अंतरालेब्रह्मणेतस्मात्प्राक्ब्रह्मपुरुषेभ्यः विश्वेभ्योदेवेभ्यः सर्वेभ्योभूतेभ्यः दिवाचारिभ्यइत्युत्तरे
रक्षोभ्यःस्वाहेतिसर्वोत्तरतः ततोपसव्येनाग्नेय्यांस्वधापितृभ्यइतिपुरुषाकारोवैश्वदेवप्रयोगः अथ
मनुष्ययज्ञः मनुः अतिथिभ्योन्नदानंचनृयज्ञःसतुपंचमः पुष्कलस्यप्रमाणान्नमन्यपात्रेसमुद्ध ॥५५॥
रेत् अक्षतोदकहस्तेनचोपवीतीनिवेदयेत् योगिभ्यःसनकादिभ्यइदंचान्नमितीतिच दद्यादन्नं

नह्रिमायकुर्याद्गृहबलिंतथा अन्नशक्तिर्भवेदाशक्त्यन्नदोषैर्नलिप्यते ब्राह्मणभोजनाशक्तौपराशरः
नृयज्ञसिद्धयेदद्याद्भिक्षांसंकल्पपूर्विकां कूर्मपुराणेपि हंतकारमथाग्रंवाभिक्षांवाशक्तितोद्विजः दद्याद
तिथयेनित्यंबुध्यातंपरमेश्वरमिति भिक्षालक्षणंमनुनोक्तं ग्रासमात्रंभवेद्भिक्षाअग्रंग्रासचतुष्टयं अग्रं
चतुर्गुणीकृत्यहंतकारोविधीयते एषप्रयोगः अभ्यागतंब्राह्मणंप्राङ्मुखमुपविश्यगंधादिनासंपूज्य
निवीती ब्राह्मणभोजनपर्याप्तमन्नंपात्रस्थंसनकादिमनुष्येभ्यइदमस्तुनममेत्युक्त्वातेनान्नेनभोज
येत् तदाभावेभिक्षान्नयंपूर्ववत्संकल्प्यभिक्षुभ्योदद्यादितिमनुष्ययज्ञः यदिवैश्वदेवात्प्रागेवभिक्षु
केसमागतेविशेषमाह गौतमः वैश्वदेवेतुसंप्राप्तेभिक्षुकेगृहमागते उद्धृत्यवैश्वदेवार्थंभिक्षांद
त्वाविसर्जयेत् वैश्वदेवकृतंपापंशक्तोभिक्षुर्व्यपोहितुं नहिभिक्षुकृतान्दोषान्वैश्वदेवोव्यपो
हति इयंचभिक्षास्वतंत्रफलार्था भिक्षादानप्रशंसामाहयमः सत्कृत्यभिक्षवेभिक्षांयःप्रयच्छ
तिमानवः गोप्रदानसमंपुण्यंतस्याहभगवान्यमः भिक्षुकानाहयाज्ञवल्क्यः यतिश्चब्रह्मचा
रीचविद्यार्थीगुरुपोषकः अध्वगःक्षीणवृत्तिश्चषडेतेभिक्षुकाःस्मृताः अतिथयश्चोक्तास्तेनैव शूद्रो
वायदिचांडालःशत्रुर्वाब्रह्मघातकः आगतोवैश्वदेवांतेसोतिथिःस्वर्गदायकः इति इतिपंचमहाय
ज्ञाः एषामकरणेप्रायश्चित्तमाहव्यासः होमान्नदानरहितंनभोक्तव्यंकदाचन अकृत्वापंचयज्ञां

स्तुभुक्त्वाचांद्रायणंचरेत् यदिदैवान्माध्यान्हिकंस्वेकालेनभवतिचेद्गौणकालेकार्यं गौणकालेप्य
संभवेयमः दिवोदितानिकर्माणिप्रमादादकृतानिचेत् शर्वर्याः प्रथमेयामेतावत्कुर्याद्यथाक्रमम्
अत्रमुख्यकालानुरोधात्सायंसंध्योपासनमादौकृत्वागंतूनामंते निवेश इतिन्यायेनातीतकालंप्रात
र्मध्यान्हिकंपश्चात्कार्यमितिन्यायतः प्राप्तंतस्यनिषेधार्थंयथाक्रममितिवचनं मरीचिरपि रात्रौप्रह
रपर्यंतंदिवाकर्माणिकारयेत् अवगाहंब्रह्मयज्ञंसौरजाप्यंनकारयेत् आश्वलायनैस्तुरात्रावपिब्रह्म
यज्ञःकार्यः तस्यद्वावनध्यायौयदात्माशुचिर्यद्देशइतिसूत्रात् मध्यंदिनेप्रबलमधीयीतेत्य एवंविद्वा
न्महारात्रेउषस्युदितेतथाग्रामेमनसास्वाध्यायमधीयीतदिवानक्तंवेतिवृत्तावुक्तत्वाच्च विधुरस्यवै
श्वदेवविशेषउक्तोवृद्धवसिष्ठेन अनग्निकस्तुयोविप्रःसोन्नंव्याहृतिभिःस्वयं हुत्वाशाकलमंत्रैस्तु
शिष्टादन्नाद्बलिंहरेत् अथप्रयोगः पूर्ववदग्निस्थापनादिकृत्वान्नमादाय ॐभूःस्वाहा,अग्नयइदंन
मम ॐभुवःस्वाहावायवइदंनमम ॐस्वःस्वाहासूर्यायेदंनमम ॐभूर्भुवःस्वःस्वाहाप्रजापतयइदंन
मम अथशाकलमंत्रास्तैत्तिरीयकारण्ये देवकृतस्यैनसोवयजनमसिस्वाहा अग्नयइदं॰ मनुष्यकृ
तस्यैनसोवयजनमसिस्वाहा ॐपितृकृतस्यैनसोवयजनमसिस्वाहा ॐ आत्मकृतस्यैनसोवय
जनमसिस्वाहा ॐअन्यकृतस्यैनसोव॰ ॐअस्मत्कृतस्यैनसोव॰ ॐ यत्स्वपतश्चजाग्रतश्चैनश्चकृ

मतस्याव॰ यद्दिवानक्तंचैनश्चकृमतस्याव॰ यत्स्वपंतश्चजाग्रतश्चैनश्चकृमतस्यावयजन॰ यद्विद्वांसश्चाविद्वां
सश्चैनश्चकृमतस्याव॰ ॐ एनसएनसोवयजनमासिस्वाहेत्येकादशाहुतीर्हुत्वा सर्वत्राप्यग्नयइदंनममेत्युद्दे
शत्यागोपूर्ववत्कुर्यादिति ततोदेवंसंपूज्यनैवेद्यंप्रदर्श्यनित्यश्राद्धंकुर्यात् तत्षड्दैवत्यंविश्वेदेवहीनंदक्षि
णापिंडावाहनस्वधाकाराग्नौकरणब्रह्मचर्यादिनियमरहितादिकार्यं तत्रदक्षिणादानेविकल्पः विकल्प
विधायकंतुमत्कृतश्राद्धचंद्रिकायांद्रष्टव्यं देशकालौनिर्दिश्यास्मत्पितृपितामहप्रपितामहानाममुक
शर्मणाममुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांसपत्नीकानां तथामातामहादीनांसपत्नीकानांनित्यश्रा
द्धंकरिष्यइतिसंकल्प्य विप्रंनिमंत्र्य चंदनादिनासंपूज्यपलाशादिपात्रेन्नंपरिविष्यगायत्र्याप्रोक्ष्यपृथिवी
तेपात्रमित्यादिब्रह्मार्पणांतंकृत्वा ब्राह्मणंभोजयेत् अशक्तौस्वपंक्तौपित्रुद्देशेनब्राह्मणमात्रंभोजयेत् तद
शक्तावपिकिंचिदन्नमुधृत्यैतदन्नंपितृभ्यःस्वधानमइत्युक्त्वा ब्राह्मणायदद्यात् एतच्चनित्यं नित्यश्रा
द्धाकरणेत्वर्चनंतइतिदशधाजपेदितिऋग्विधानेप्रायश्चित्तश्रवणात् अथभोजनविधिः आश्वलायनस्मृ
तौ अर्कपर्वद्वयेरात्रौचतुर्दश्यष्टमीदिवा एकादश्यामहोरात्रंभुक्त्वाचांद्रायणंचरेदिति व्यासः पंचा
र्द्रोभोजनंकुर्यात्प्राङ्मुखोमौनमास्थितः हस्तौपादौतथैवास्यमेषुपंचार्द्रतामता हस्तौपादौप्रक्षा
ल्याचम्येत्यर्थः आश्वमेधिके आर्द्रपादस्तुभुंजीयात्प्राङ्मुखश्चासनेशुचौ पादाभ्यांधरणींस्पृ

स्थापादेनैकेनवापुनरिति आसनेवर्ज्यानिप्रचेताः गोशकृन्मृन्मयंभिन्नंतथापालाशपिप्पलं लोहबद्धंस
देवार्केवर्जयेदासनंबुधः ब्रह्मपुराणे उपलिप्तेसमेस्थानेशुचौश्लक्ष्णसमन्विते चतुरस्रंत्रिकोणंचव
र्तुलंचार्धचंद्रकं कर्तव्यमानुपूर्व्येणब्राह्मणादिषुमंडलं हेमाद्रावत्रिः पंचाशत्पलिकंकांस्यंत्वधिकंभो
जनायवै गृहस्थैस्तुसदाकार्यमभावेरूप्यहेमयोः क्वचिन्निषेधमाह स्मृतिचंद्रिकायांप्रचेताः तांबूला
भ्यंजनेचैवकांस्यपात्रेचभोजनं यतिश्चब्रह्मचारीचविधवाचविवर्जयेत्इति अत्रदिङ्नियमःकौर्मे ॥प्रा
ङ्मुखोन्नानिभुंजीतेति आयुष्मान्प्राङ्मुखोभुंक्तेयशस्वीदक्षिणामुखः धनवान्पश्चिमायांतुधर्मवा
नुत्तरामुखः पुत्रवांस्तूत्तरामुखोनाश्नीयात् मनुः पुत्रवांस्तुगृहेनित्यंनाश्नीयादुत्तरामुखः सोमवारेत-
थाभ्यंगंवर्जयेत्तुसदाबुधइतिनिषेधात् अत्राभ्यंगपदात्सर्षपादितैलाभ्यंगएवनिषिद्धोनतुतिलतैला
भ्यंगः तैलाभ्यंगनिषेधेतुतिलतैलंनिषिध्यते अभ्यंगस्यनिषेधेतुसार्षपादिनिषिध्यतइतिमदनरत्नेप्र
चेतोवाक्यात् जीवन्मातृपितृकस्तुदक्षिणामुखोपिनाश्नीयात् उक्तंचप्रयोगपारिजाते स्मृतिमंजर्यां
पितरौजीवमानौचेन्नाश्नीयाद्दक्षिणामुखः तयोस्तुजीवतानेकस्तथैवनियमःस्मृतइति विज्ञानेश्वरस्तु
अनिशंमातृहीनानांयशस्यंदक्षिणामुखं भोजनमितिशेषः सायंप्रातर्द्विजातीनांअशनंश्रुतिचोदि
तं नांतराभोजनंकार्यमग्निहोत्रसमोविधिः नचान्नाग्निहोत्रसमोविधिरित्युक्तेःप्रातरेवभोजनंकार्यमि

तिवाच्यं दिवसस्यपंचमेतुभागेभोजनमाचरेदितिकात्यायनोक्तेः अतोत्रप्रातःशब्दोमाध्यान्हिकोत्तरका
लपरः अथपरिवेषणंस्मृत्यंतरे शाकादीन्पुरतःस्थाप्यभक्ष्यंभोज्यंचवामतः अन्नंमध्येप्रतिष्ठाप्य
दक्षिणेघृतपायसं ओदनेपरमान्नेचआज्यपात्रंप्रदिस्थितं तदाज्यंचभवेद्भक्तंतदन्नंमांससुच्यते
घृतमपिभोजनात्प्रागेवप्रार्थ्यंनतूच्छिष्टे नोच्छिष्टोघृतमादद्यादितिस्मृतिचंद्रिकाकारधृतविष्णुवा-
क्यात् शातातपः हस्तदत्तानिचान्नानिप्रत्यक्षंलवणंतथा मृत्तिकाभक्षणंचैवगोमांसाशनवत्स्मृतं
प्रत्यक्षलवणंहस्तदत्तंनिषिद्धंतथाचपैठीनसिः लवणंव्यंजनंचैवघृततैलंतथैवच लेह्यंपेयंचविविधं
हस्तदत्तंनभक्षयेत् शूलपाणौभविष्ये सैंधवंलवणंयच्चयच्चसामुद्रिकंभवेत् पवित्रेपरमेत्वेतेप्रत्यक्षे
अपिनित्यशइति ब्रह्मपुराणे अन्नंदृष्ट्वाप्रणम्यादौप्रांजलिःकारयेत्ततः अस्माकंनित्यमस्त्वेतदि
तिभक्त्याथवंदयेत् पात्राद्ग्रासंसमुद्धृत्यसम्यक्पात्रांतरक्षिपेत् जलमादायमंत्रेणगोग्रासंविनिवेदये
त् मंत्रस्तुप्रयोगेवक्ष्यते गृह्यपरिशिष्टे आर्द्रपाणिराचांतःशुचौदेशेप्रत्यङ्मुखःप्राङ्मुखोवोपविश्य
चतुरस्रमंडलेपात्रस्यमन्नंप्रणवव्याहृतिपूर्वयासावित्र्याभ्युक्ष्यस्वादोपितोमधोपितोइत्यभिमंत्र्य स
त्यंत्वर्तेनपरिषिंचामीतिदिवापरिषिंचेदृतंत्वासत्येनपरिषिंचामीतिरात्रौ दक्षिणतोभुविभूपतयेभुवनप
तयेभूतानांपतयइतिनमोंतैः प्राक्संस्थंप्रत्यक्संस्थंवाबलिंविकीर्यसमाहितोमृतोपस्तरणमसीत्यपःप्रा

आ० ॥ स्य सव्येनपाणिनापात्रमालभ्यतर्जनीमध्यमांगुष्ठैःप्राणाय मध्यमानामिकांगुष्ठैः अपानायानामिकाक कृ०
॥४७॥ निष्ठांगुष्ठैर्व्यानायकनिष्ठतर्जन्यंगुष्ठैरुदानायसर्वांगुलिभिःसमानायमुखेजुहुयात्सर्वाभिरेववासर्वेभ्योजु
हुयादेवंवाग्यतोभूत्वामृतापिधानमसीत्यपिधानंप्राश्य शोधितमुखपादपाणिर्द्विराचामेदेवंभुंजानोग्नि
होत्रफलमश्नुतेबलपुष्टिमासर्ववान्सर्वमायुर्गिति भविष्यपुराणेविशेषः भोजनात्किंचिदन्नाग्रंधर्म-
राजायवैबलिं दत्वाथचित्रगुप्तायप्रेतेभ्यश्चेदमुच्चरेत् प्रेतबलिमंत्रोप्यग्रेवक्ष्यते बल्युद्धरणंकार्यमि
त्युक्तंरामार्चनचंद्रिकायां भोजनादौबलिर्मुक्तःसहिउद्धृत्यभोजनम् अनुद्धृत्यतुयोभुंक्तेप्राणाया-
माष्टकंचरेत् स्मृत्यंतरे चित्राहुतीरनुद्धृत्ययोभुंक्तेमासपंचकं अथवंसकेवलंभुंक्तेज्ञानतोज्ञानतोपि
वेति शौनकः स्वाहांताःप्रणवाद्याश्चनाम्नामंत्राश्चवायवइति आश्वमेधिके यथारसंनजानाति
जिह्वाप्राणाहुतोनृप तथासमाहितःकुर्यात्प्राणाहुतिमतंद्रितइति अपरार्केऽत्रिः मधुपर्केचसोमेच
अप्सुप्राणाहुतीषुच नोच्छिष्टस्यभवेद्दोषस्त्वत्रेश्चवचनंयथा विष्णुपुराणे प्राग्द्रवंपुरुषोश्नीया
न्मध्येचकठिनाशनः अंतेपुनर्द्रवाशीतुबलारोग्येनमुंचति जठरंपूरयेदर्धमन्नैर्भागंजलस्यच वा
योःसंचरणार्थायचतुर्थमवशेषयेदिति आपस्तंबः अष्टौग्रासामुनेर्भक्ष्याःषोडशारण्यवासिनः द्वा ॥४७॥
त्रिंशत्तुग्रहस्थस्यत्वमितंब्रह्मचारिणः बौधायनः भोजनंहवनंदानमुपहारःप्रतिग्रहः बहिर्जानु

नकार्याणितद्वदाचमनंस्मृतं वृद्धमनुः भोजनंतुननिःशेषंकुर्यात्प्राज्ञःकथंचन अन्यत्रदधिसक्त्वा
ज्यपललक्षीरमध्वपइति पललंतिलमिश्रओदनः प्राणाहुतिग्रहणोत्तरंपात्रंयत्नादोस्थाप्यमित्याह
व्यासः न्यस्तपात्रस्तुभुंजीतपंचग्रासान्महामुने शेषमुद्धृत्यभोक्तव्यंपित्रर्थेनतुचोद्धरेदिति बृहस्प
तिः नस्पृशेद्वामहस्तेनभुंजानोन्नंकदाचन नपादौनशिरोबस्तिनपदाभाजनंस्पृशेदित्यादिनिषे
धाश्वाचारमयूखादिषुद्रष्टव्याः पराशरः एकपंक्त्युपविष्टानांविप्राणांसहभोजनं यद्येकोपित्य
जेत्पात्रंशेषमन्नंनभोजयेत् पंक्तिभेदकान्याहबृहस्पतिः अग्निनाभस्मनाचैवस्तंभेनसलिलेनवा
द्वारेणैवचमार्गेणपंक्तिच्छेदोबुधैःस्मृतइति यमोपि उदकंचतृणंभस्मद्वारंपंथास्तथैवच एभिरं
तरितंकृत्वापंक्तिदोषोनविद्यतइति ग्रंथांतरे नृणांभोजनकालेतुयदिदीपोविनश्यति तदन्नंपा
णिनास्पृष्ट्वासावित्रींमनसास्मरेत् पुनर्दीपंततोलब्ध्वाशेषंभुंजीतकामतः अन्यदन्नंनभोक्तव्यं
भुक्त्वाचांद्रायणंचरेदिति देवलः भुक्त्वोच्छिष्टंसमाघ्रायसर्वस्माद्धुतवर्जितम् उच्छिष्टभागधेयेभ्यः
सोदकंनिर्वपेद्भुवि अमृतापिधानमसीत्यपःप्राश्यभुविक्षिपेत् उत्थायबहिरागत्यमुखहस्तादिशोधये
दितिसएव आचम्यचततःकुर्याद्दंतकाष्ठस्यभक्षणं भोजनेदंतलग्नानिनिर्हृत्याचमनंचरेत् दंत

आ० ग्नमसंहार्यैलेपंमन्येतदंतवत् नतत्रबहुशः कुर्याद्यत्नसुद्धरणंप्रति अथप्रयोगः पाणिपादं प्रक्षाल्याचम्य कौ०
॥५८॥ श्रीपर्ण्यादिपीठे प्राङ्मुखः प्रत्यङ्मुखोवोपविश्यभूमिंप्रोक्ष्य चतुरस्त्रमंडलंकृत्वा तदुपरिहेमरूप्ययोरभावे
द्विपंचाशत्पलपरिमितंकांस्यपात्रंनिधायपरिवेषणंकारयित्वा तस्मादन्नाद्गोग्रासार्थमन्नंपात्रांतरेकृत्वा
सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः प्रतिगृण्हंतुमेग्रासंगावस्त्रैलोक्यमातरः इतिमंत्रेणगवेग्रासंद
त्वाचम्यप्रांजलिरन्नंप्रणम्यास्माकंनित्यमेतदस्तुइतिप्रार्थ्य ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं० दित्यन्न
मभ्युक्ष्य स्वादोपितोमधोपित्तोवयंत्वावृणीमहे अस्माकमविताभवेत्यभिमंत्र्य सत्यंत्वर्तेनपरिषिंचा
मीतिदिवा रात्रौऋतंत्वासत्येनपरिषिंचामीतिप्रदक्षिणमन्नंपरिषिच्यदक्षिणतोभुव्युदकधारांप्राकू
संस्थांकृत्वातत्र भूपतयेनमः भुवनपतयेनमः भूतानांपतयेनमः धर्माय० चित्रगुप्तायनमः यत्रक
चनसंस्थानांक्षुत्तृष्णोपहतात्मनाम् प्रेतानांतृप्तयेक्षय्यमिदमस्तुयथासुखमिति प्रेतबलिंचैवंब
लिषट्कंप्राक्संस्थंदत्वोपर्युदकंदत्वाबलीनुद्धृत्यहस्तंप्रक्षाल्य अपोशनार्थंजलमादाय वामहस्तमध्य
मानामिकांगुष्ठेर्भोजनपात्रमालभ्यान्नंब्रह्मेतिध्यात्वासमाहितोमृतोपस्तरणमसीतिनिःशब्दंपीत्वा
घृताक्तमन्नंपूर्वोक्ततत्तदंगुलीभिः सर्वाभिर्वास्येपंचप्राणाहुतीर्जुहुयात् तत्रमंत्राः ॐ प्राणायस्वाहा ॥५८॥
प्राणायेदंनमम ॐ अपानायस्वाहा अपानायेदंनमम ॐ व्यानायस्वाहा व्यानायेदंनमम ॐ उदानायस्वा

हा उदानायेदंनमम ॐ समानायस्वाहा समानायेदंनमम ॐ ब्रह्मणेस्वाहा ब्रह्मणइदंन० ततोजलं स्पृष्ट्वा यथेष्टंलौकिकवाक्यान्यनुच्चारयन् कवलेकवले इष्टदेवतांस्मृत्वा भोजनंकुर्यात् एतच्चभोजनं रहसिकार्यं तथाचस्मृतिचंद्रिकायांदेवलः आहारंतुरहःकुर्याद्विहारंचैवसर्वदा गुप्ताभ्यांलक्ष्मीयुक्तः स्यात्प्राकाश्येहीयतेश्रियेति ततोभोजनांतेपात्रस्थमन्नंकिंचिद्गृहीत्वाघ्रायभूमौविसृज्य तत्रमंत्रः अ स्मत्कुलेमृतायेचपितृलोकविवर्जिताः भुंजंतुममचोच्छिष्टंपात्राच्चैवंभुविक्षिपेत् उत्तरापोशनार्थंजल मादायामृतापिधानमसी त्यर्धंपीत्वार्धं रौरवेपूयनिलयेपद्मार्बुदनिवासिनां अर्थिनामुदकंदत्तमक्षय्यमु पतिष्ठत्वितिमंत्रेणपितृतीर्थेनभूमौनिषिच्यांगणादावागत्यमृद्भिरद्भिः पाणिमुखेसंशोध्य षोडशगंडूषान् कृत्वा दंतकाष्ठेनदंतान्संशोध्यहस्तौपादौप्रक्षाल्य भोजनपात्रप्रक्षालनंतद्देशमार्जनंकारयित्वाऽऽचम्या- प्यायस्वेतिभुक्तमन्नमनुमंत्र्यप्रणवेनात्मानंब्रह्मणिसंयोज्यजलेनहस्तौनिघृष्यतज्जलमंगुष्ठाभ्यांअ- क्ष्णोर्निषिंचेत् तत्रमंत्रः शर्यातिंचसुकन्यांचच्यवनंशक्रमश्विनौ भुक्तमात्रस्मरेद्यस्तुचक्षुस्तस्य नहीयतइति ततःशतपदानिगत्वास्वासनेउपविश्य अगस्तिरग्निर्वडवानलश्चभुक्तंमयान्नंजरयत्वशेषं सुखंममैतत्परिणामसंभवंयच्छत्वरोगंममचास्तुदेहे इत्युदरंपरिमृज्यतांबूलंभक्षयेत् अथतांबूल भक्षणमाहमार्कंडेयः भूयोप्याचम्यकर्तव्यंततस्तांबूलभक्षणं वसिष्ठः सुपूगंचसुपत्रंचचूर्णेनचस

मन्त्रितं दत्वातुद्विजदेवेभ्यस्तांबूलंचर्वयेद्द्विजः पर्णमूलेभवेद्व्याधिःपर्णाग्रेपापसंभवः चूर्णपत्रंक्षिपेदा
युःशिराबुद्धिविनाशिनी तस्मादग्रंचमूलंचशिरांचैवविशेषतः चूर्णपत्रंवर्जयित्वातांबूलंखादयेद्बुधेति
इतिश्रीभारद्वाजमहादेवभट्टात्मजदिवाकरकृतेआचारार्केपंचमभागकृत्यम् वेणुसंभवनिनादमोहि
तागोपिकास्तटमुपेत्ययामुनं येनसार्द्धमरमंतसंभ्रमात्तंभजामिवसुदेवनंदनम् १ अथषष्ठादि
भागकृत्यं दक्षः इतिहासपुराणाद्यैःषष्ठसप्तमकौनयेत् अष्टमेलोकयात्रातुबहिःसंध्याततः
पुनः यमः रवेरस्तमयात्पूर्वंघटिकैकायदाभवेत् सायंसंध्यामुपासीतकुर्याद्धोमंचपूर्ववत् सायंसं
ध्यायांविशेषोलिख्यते शौनकः अग्निश्चेत्यनुवाकेनसायंसंध्यापिबेदपः इदंमंत्राचमनं अथार्घ्य
दानं तत्र प्रातस्तिष्ठन्नर्घ्यदानंसायंतूपविशन्भुवि इतियमवाक्यात्सायंसंध्यायामुपविश्यैवकेचि
दर्घ्यदानंकार्यमित्याहुस्तच्चिंत्यं जलमंजलिमादायगायत्र्याचाभिमंत्रितं दद्यादर्घ्यत्रयस्तिष्ठंस्त्रिषु
कालेषुबह्वृचइत्याश्वलायनस्मृतेः पाणिभ्यांजलमादायगायत्र्याचाभिमंत्रितं रवेरभिमुखंतिष्ठं-
स्त्रिरूर्ध्वंसंध्ययोःक्षिपेदितिशौनकोक्तेश्च गृह्यपरिशिष्टेपि अथाचम्यदर्भपाणिःपूर्णमुदकांजलिमु
दित्यादित्याभिमुखःस्थित्वाप्रणवव्याहृतिपूर्वयासावित्र्यात्रिरर्घ्यंनिवेद्याक्षिपेदिति श्रीमातामहचर ॥४९॥
णानांपूर्ववत्त्रिरर्घ्यंदत्वेतिवदतामयमेवाशयः प्रयोगपारिजातादयः सर्वेवाजपेययाजिनश्चैवमेवाहुः

जपेविशेषः कारिकायां अर्धास्तमयआदित्येपश्चिमायायउत्तरः भागस्तन्मुखआसीनःसावित्रीं वाग्यतोजपेदिति उत्तरप्रतीच्याअष्टमोभागइत्यर्थः दिशोष्टधाविभक्तायाःप्रतीच्याभागसप्तकम् हित्वादक्षिणतोन्यस्तुयोष्टमोभागउत्तरः अस्याभिमुखवतोविप्रोभूत्वाप्रयतमानसः जपन्नासीतसा वित्रींसंध्यांकृत्स्नामतंद्रितः इतिशौनकोक्तेः उपस्थानेविशेषः शौनकः इमंमेवरुणेत्यादिसायंका लेविशेषतइति व्यासोपि जपेद्वारुणमंत्रांस्तुइमंमेवरुणादिकान् चतुर्मंत्रान्विशेषज्ञःसंध्याफ लमवाप्नुयादिति अथप्रयोगः तत्रहस्तौपादौप्रक्षाल्यद्विराचम्य प्राणानायम्यममः सायंसंध्यामु पासिष्यइतिपूर्ववत्प्रथममार्जनंकृत्वा जलमादाय अग्निश्चेत्यनुवाकस्ययाज्ञवल्क्यउपनिषद्दृषिः अग्निमामन्युमन्युपत्यह्वानिदेवताः गायत्रीपंक्तिर्विराट् छंदांसिमंत्राचमनेवि० अग्निश्चमामन्युश्चम न्युपतयश्चमन्युकृतेभ्यः पापेभ्योरक्षंतां यदन्हापापमकार्षंमनसावाचाहस्ताभ्यां पद्भ्यामुदरेणशि श्ना अहस्तदवलुंपतु यत्किंचदुरितंमयि इदमहंमाममृतयोनौ सत्येज्योतिषिजुहोमिस्वाहेतिपीत्वा पूर्ववद्द्विराचम्यद्वितीयतृतीयचतुर्थमार्जनाद्यघमर्षणांतंकृत्वा पश्चिमाभिमुखस्तिष्ठन्पाणिभ्यांज लमादायसावित्र्याभिमंत्र्यश्रीसवित्रइदमर्घ्यंसमर्पयामीतित्रिरर्घ्यंदद्यात् ततोसावादित्योब्रह्मेत्या दिगायत्रीजपसंकल्पांतंकृत्वावायव्यलग्नपश्चिमाभिमुखोभूत्वा दृष्टांदृष्ट्वादित्यमंडलमध्यस्थांश्या

मांश्यामांबरानुलेपनस्त्रगाभरणामेकवस्त्रांशंखचक्रगदापद्मांकचतुर्भुजांगरुडासनारूढांविष्णुदेव 
त्यांसामवेदमुदाहरंतींस्वर्लोकाधिष्ठात्रींसरस्वतींनामदेवतांध्यात्वा मनसासंपूज्ययथाशक्तिजपेत्
ततउपस्थानंकुर्यात् तद्यथा इमंमेवरुणतत्वायामीत्यृचोराजीगर्तिःशुनःशेपऋषिःवरुणोदेवता आ
द्यागायत्रीद्वितीयात्रिष्टुप् वरुणोपस्थानेविनियोगः ॐइमंमेवरुणश्रुधीहवमद्याचमृळय त्वामव
स्युराचके ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः अहेळमानोवरुणेहबोध्युरुशं
समानआयुःप्रमोषीः जातवेदसइत्यादिपूर्ववदितिसायंसंध्या अथसायमौपासनं पूर्वोक्तंब्रह्मचारी
त्वग्निकार्यंकुर्यात् अग्निकार्यंततःकुर्यात्संध्ययोरुभयोरपीतियोगिवाक्यात् सायमेवाग्निमिंधीतेत्येक
इतिलौगाक्षिसुक्तेः तच्चेत्थं आचम्यतिथ्याद्यनुकीर्त्यममउ॰ प्रातरग्निकार्यंकरिष्यइतिसंकल्प्य प्रातःसा
यंतुसायमग्निकार्यंकरिष्यइतिसंकल्प्याग्न्यावाहनादिपूजनांतंकृत्वाप्रादेशमात्रांसमिधंगृहीत्वाऽग्नयेस
मिधमाहार्षंबृहतेजातवेदसे यथात्वमग्नेवर्धस्वसमिधाब्रह्मणावयंस्वाहेतिजुहुयात् अग्नयइदंनममे
तित्यजेत् ततआर्द्रपाणिंतत्वमग्नौप्रताप्य ॐतेजसासासमनज्मीतिसंहतौष्ठद्वयंमुखमवाङ्गिःमृज्यपा
णिंप्रक्षाल्य पुनर्द्विवारमेवंकृत्वा तिष्ठन्नग्निमुपतिष्ठेत् तत्रमंत्राः मयिमेधांमयिप्रजांमय्यग्निस्तेजो ॥५०॥
दधातु मयिमेधांमयिप्रजांमयींद्रइंद्रियंदधातु मयिमेधांमयिप्रजांमयिसूर्योभ्राजोदधातु यत्तेअग्नेतेज

स्तेनाहंतेजस्वीभूयासं यत्तेअग्नेवर्चस्तेनाहंवर्चस्वीभूयासं यत्तेअग्नेहरस्तेनाहंहरस्वीभूयासमेभिरूपस्था
यविभूतिंधृत्वा आंगिरसबार्हस्पत्यभारद्वाजेतित्रिप्रवरान्वितभारद्वाजगोत्रोत्पन्नोहंतोमदेवशर्माभोअग्ने
त्वामभिवादये एवंस्वस्वप्रवराद्युच्चार्याभिवादयेदित्यग्निकार्यं अथदीपकालमाह मरीचिः रवेरस्तंसमा
रभ्ययावत्सूर्योदयोभवेत् यस्यतिष्ठेद्गृहेदीपस्तस्यनास्तिदरिद्रता आयुर्दःप्राङ्मुखोदीपोधनदःस्यादुद
ङ्मुखः प्रत्यङ्मुखोदुःखदोसौहानिदोदक्षिणामुखइति प्रत्यङ्मुखनिषेधस्तुकार्यकारिनित्यदीपविष
यएव श्रीकार्तवीर्यादिदीपःप्रत्यङ्मुखएवस्थाप्यः ततोदेवंसंपूज्यद्वितीयभोजनंकृत्वा मुक्तकादिद
र्शनेनशर्वरीप्रथमभागंनीत्वास्वपेत् अथस्वापविधिर्मात्स्ये शुचिदेशंविविक्तंतुगोमयेनोपलेपयेत् वै
दिकैर्गारुडैर्मंत्रैरभिमंत्र्यस्वपेत्ततः मांगल्यंपूर्णकुंभंचशिरःस्थानेनिधापयेत् रात्रिसूक्तंजपन्रात्रौरात्रि
क्षामोभवेन्नरः स्कांदे उपानहौवेणुदंडमंबुपात्रंतथैवच तांबूलादीनिसर्वाणिसमीपेस्थापयेद्गृही न
स्वपेदित्यनुवृत्तौमार्कंडेयः नार्द्रवासाश्चनग्नश्चनोत्तरापरमस्तकः नाकाशेसर्वतःशून्येनचचैत्यद्रुमेतथे
ति स्वापकालेविष्णुंनमस्कृत्यस्वापंकुर्वीत रात्रिसूक्तंजपन्स्मृत्वादेवांश्चसुखशायिनः नमस्कृत्वाव्यय
विष्णुंसमाधिस्थंस्वपेन्निशि इतिचंद्रिकाकारधृतपुराणात् सुखशायिनोगस्त्यादीन् विष्णुपुराणे प्रा
च्यांदिशिशिरःशस्तंयाम्यायामथवानृप सदैवस्वपतःपुंसोविपरीतंतुरोगदमिति आश्वलायनः पत्नीम्

तुमतींस्निग्धांतृसांभोगविवर्जिताम् उपेयान्मध्यरात्रांतेजीर्णेन्नेतृसमानसइति यमः पूर्वरात्रेव्यतीते-
तुसगच्छेद्रतिमंदिरं पादौप्रक्षालयेत्पूर्वंपश्चाच्छय्यांसमाविशेत् धौतवस्त्रंचतांबूलंसंयोगेचशक्रभावहं
शय्याचोक्ता शिल्पशास्त्रे चतुरशीतिपर्वाणिदैर्घ्येणपरिकल्पयेत् षष्ट्यंगुलानिविस्तारंमंचकंहस्तसं
मितं एवंशय्याविधातव्यासर्वेषांशयनोचिता मानाधिक्येदरिद्रःस्यान्मानहीनेक्षयक्षयइति स्मृतिच-
द्रिकायांविष्णुपुराणेपि नविशालांनवाभग्नांनासमांमलिनांनच नचजंतुमयींशय्यामधितिष्ठेदना
स्तृतामिति पर्यंकोप्युक्तस्तत्रैव आयामःसप्ततालःस्याच्चतुस्तालंतुविस्तृतं द्वितालमुन्नतंज्ञेयमे
तत्पर्यंकलक्षणं तालादिप्रमाणंचोक्तं प्रयोगरत्नेस्मृत्यंतरे अंगुष्ठादिकनिष्ठांतंभवेन्मानचतुष्टयं
प्रादेशस्तालगोकर्णवितस्तिस्तुयथाक्रममिति अथस्त्रीकृत्यमाहयज्ञः भर्तुःपादौनमस्कृत्यप
श्चाच्छय्यांसमाविशेत् अथरतिः संस्मृत्यपरमात्मानंपत्न्याजंघेप्रसारयेत् योनिंस्पृष्ट्वाजपेत्सू
क्तंविष्णुर्योनिंप्रजापते रेतःसिंचेत्ततोयोन्यांतस्माद्गर्भंबिभर्तिसेति याज्ञवल्क्यः षोडशर्तुनिशाः
स्त्रीणांतस्मिन्युग्मासुसंविशेत् यथाकामीभवेद्वापिस्त्रीणांवरमनुस्मरन् तासामाद्याश्चतस्र
स्तुनिंदितैकादशीतथा त्रयोदशीचशेषास्तुप्रशस्तास्तत्ररात्रयः अमावास्याष्टमीचैवपौर्णमासी ॥५६॥
चतुर्दशी ब्रह्मचारीभवेन्नित्यमप्यृतौस्नातकोद्विजइत्यादिनिषेधाः मयूखादिषुद्रष्टव्याः स्मृत्य

र्थसारे ऋतौतु मैथुने स्नायाद्गर्भसंभूतिशंकया अनृतौ तदभावाच्च शौचं त्रिर्मूत्रवच्चरेत् तत्र ऋतुदर्श
नमारभ्य षोडशदिवसे ष्वाद्यदिनचतुष्टयमेकादशं त्रयोदशं च विहाय अवशिष्टेषु दिवसेषु पुत्रार्थी युग्मदिवसे
कन्यार्थ्ययुग्मदिने चतुर्थीषष्ठ्यष्टमीचतुर्दशीपंचदशीश्राद्धात्पूर्वदिनव्रतोपवासश्राद्धनिमंत्रिततद्भुक्तशनि
रविभौमवारभरणीकृत्तिकार्द्रामघापूर्वाफाल्गुनीविशाखाज्येष्ठामूलपूर्वाषाढापूर्वाभाद्रपदा निजजन्मनक्षत्र
संक्रांतिव्यतीपातवैधृतिव्यतिरिक्ते शय्यांतरे उपवीती मन्मथगृहं स्पृष्ट्वा विष्णुर्योनिमिति जपित्वा ईश्वरं
स्मृत्वोपेत्योत्थाय स्नायात् अनृतौ तु पूर्वोक्तशौचं कुर्यात् एवं यथायोगं शय्यां संत्यज्य शय्यायां ययास्व
स्वं प्रबोधपर्यंतं स्वपित्वा पुनः प्रभाते उत्थाय प्रातःस्मरणादीनि कर्माणि प्रतिदिनं कुर्यात् एतेषामकरणे
प्रत्यवायः स्मृत्यर्थसारे नास्तिक्यात्कर्महानौ तु मासेन पतितः स्मृतः द्वादशाब्दव्रतेनैव तस्य शुद्धि
स्तु नान्यथा तन्निरीक्ष्यार्कमीक्षेत स्पर्शे स्नायात्सचैलकं तेन च सह यो हास्यं कुर्वन्नब्देन तत्समः
तदन्नं भुक्त्वा सद्यस्तु स सर्पो गहनेवने आश्वलायनः बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्तितम्
तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेदिति कूर्मपुराणे इत्येतदखिलं प्रोक्तमहन्यहनि वै मया ब्रा
ह्मणानां कर्मजातमपवर्गफलप्रदं नास्तिक्यादथवालस्याद्ब्राह्मणो न करोति यः स याति नरकान्घो
रान्कालयोनौ प्रजायते नान्यो विमुक्तये पंथा मुक्त्वाश्रमविधिं स्वकं तस्मात्कर्माणि कुर्वीत तुष्टये प

आ० ॥५२॥ कै०

रमेष्विनइति निर्णयसिंधावत्रिः सप्तमासाधिकेगर्भेवर्धमानेतुगर्भिणी वर्जनीयाप्रयत्नेनदैवेपित्र्ये
चकर्मणि १ सप्तमासाधिकेगर्भेगर्भिण्यायत्समर्पितम् हव्यंदेवानगृण्हंतिकव्यंचपितरस्तथा २ स
प्त० यदिपच्यते अन्यगोत्रैर्नभोक्तव्यमापद्यपिनकर्हिचित् ३ सप्त० यदिपच्यते तद्गृहंभिक्षुणात्या
ज्यंनियमेनात्मवान्मुनिरिति ४ अथगर्भिणीहस्तभोजननिषेधः षष्ठेमासेतुसंप्राप्तेगर्भिण्याश्चैव
हस्ततः नभोक्तव्यंविशेषेणइतिशातातपोब्रवीत् ५ नारदसंहितायां द्विजस्यधर्मपत्नीतुअंतर्व
त्नीयदाभवेत् पंचमे निर्गतेमासितस्याहस्तेनभोजनम् नकुर्यादितिशेषः ६ शिवसंहितायांशिवः
गर्भिणीतुयदाभार्याविप्रादीनांविशेषतः तासांहस्तेनभोक्तव्यंभुक्त्वाचांद्रायणंचरेत् मासेषष्ठेस
प्तमेवाष्टमेवाप्राप्तेपत्न्यानैवकुर्यात्कदाचित् होमंयानंदेवयात्रांतथैवतस्याहस्तेनाशनंविप्रहानिं
गोभिलः योविप्रःकृतनित्यस्तुससर्वान्कृतवान्मखान् सस्नातःसर्वतीर्थेषुतसंतेनाखिलंतपः कौर्मे
नैत्यकेनास्त्यनध्यायःसंध्योपासनएवच उपाकर्मणिचोत्सर्गेहोममंत्रेषुचैवहि तथा नानध्यायेज
पेद्वेदान्रुद्रांश्चैवविशेषतः पौरुषंपावमानंचगृह्हीतानियमादृतइति हारीतः अनुष्ठितंतुयद्देवैर्मुनि
भिर्यदनुष्ठितं नानुष्ठेयंमनुष्यैस्तत्तदुक्तंकर्मचाचरेदितिदिक् उक्तंनानामयास्वयंस्वचरितंयद्याज्ञ ॥५३॥
वल्क्यादिभिःप्रोक्तंधर्मविनिर्णयेतदखिलंस्पष्टंपरिज्ञप्तये संदिष्टंगुरुदत्तमंत्ररूपयाशार्दूलविक्री-

डितंतेनश्रीरविमंडलांतरगतोनारायणः प्रीयतां ॥ ॥ इतिश्रीमद्भारद्वाजमहादेवभट्टात्मजसक
लविद्यानिधानदिवाकरकृते आचारार्केष्टमभागकृत्यं ॥ ॥ यत्पादपंकजपरागपवित्रदेहाहित्वा
कलेवरमिदंकिलदार्षदंसा ॥ जग्राहगौतमवधूः कमनीयरूपं तंजानकीपतिमजं मनसास्मरा
मि ॥ ॥ इतिआचारार्कः समाप्तः ॥ ॥ श्रीलक्ष्मीनृसिंहःप्रसन्नः ॥ ॥ ॥

इदंपुस्तकं मोहमय्यां श्रीकृष्णदासात्मजाभ्याम् गंगाविष्णु, खेमराजगुप्ताभ्याम् स्वकीये " श्रीवेंक
टेश्वराख्य " मुद्रणयंत्रालये रसाभ्रवस्विंदुमिते १८०६ शके मुद्रयित्वासमापितम्॥ विक्रमशकाब्दाः १९४०
७४॥ गंगाविष्णु श्रीकृष्णदास बजाज
श्री वेंकटेश्वर छापखाना ( मुंबई. )

